श्री काशी संस्कृत ग्रन्थमाला ७५

पीयूषवर्षजयदेवविरचितः

# चन्द्रालोकः

## पञ्चमो मयूखः

डॉ० गंगासागर राय

चौखम्भा संस्कृत संस्थान

पोस्ट बाक्स नं० ११३९
वाराणसी २२१००१ (भारत)

# चन्द्रालोके

## पञ्चमो मयूखः

### अथालङ्काराः

शब्दार्थयोः प्रसिद्ध्या वा कवेः प्रौढिवशेन वा ।
हारादिवदलङ्कारः सन्निवेशो मनोहरः ॥ १ ॥

दैतेयहृदयदारणदक्षनखप्रान्तभीषणाकारम् ।
देवत्तशर्मसमर्थं नर्मनृसिंहं हृदाऽहं कलये ॥ १ ॥

अथाऽलङ्कारसामान्यलक्षणमाह—शब्देति । शब्दस्याऽर्थस्य वा मनोहरः सन्निवेशोऽलङ्कारो न तु पुंसः कुण्डलादिवत्पृथग्भूतः । अनुप्रासादेः शब्द एवाऽन्तर्भावात् । उपमादेरर्थान्तर्गतत्वात् । एवं च हारादिवदिति दृष्टान्तो न सर्वांशेऽपि तु रमणीयताऽऽधानमात्रे । गुणादयोऽपि मनोहरसन्निवेशरूपाः किं नाऽलङ्कारा इति चेन्न । कवेरलङ्कारत्वेन प्रसिद्ध्याऽलङ्काराणां गुणादिभ्यो भेदात् । न केवलं प्रसिद्ध्यैवाऽलङ्कारा अपि तु कविप्रौढ्या पूर्वाऽऽचार्यापरिगणिता अपि कतिचिदलङ्कारा इत्याह—कवेः प्रौढिवशेन वेति । एवं चाऽलङ्कारत्वेन प्रसिद्धया कतिचिदलङ्काराः कतिचित्त्वतथाभूता अपि मया प्रौढ्या उपनिबद्धव्या इति भावः ॥ १ ॥

गुणनिरूपणानन्तरं 'सालङ्काररसानेकवृत्ति' इति काव्यलक्षणे निर्दिष्टमलङ्कारं व्याचष्टे । अलङ्क्रियतेऽनेनेत्यलङ्कार इति । करणघञ्व्युत्पत्त्याऽलङ्कारशब्दः अनुप्रासोपमाद्यलङ्कारवाचकः । अलङ्करणमलङ्कार इति भावे घञ् व्युत्पत्त्याऽलङ्कारशब्दः साहित्यशास्त्रवाचकः । शब्दार्थशरीरं काव्यम् तस्मिन् संयोगसम्बन्धेन सतोऽलङ्कारास्तस्य शोभाधायकाः । यथा कुण्डलकटकादयः शरीरे संयोगसम्बन्धेन वर्तमानाः शरीरशोभातिशायिनः ।

**अन्वयः**—कवेः प्रसिद्धया वा ( कवेः ) प्रौढिवशेन वा हारादिवत् शब्दार्थयोः मनोहरः सन्निवेशः अलङ्कारः ( भवति ) ।

**व्याख्या**—अलङ्कारसामान्यलक्षणम् व्याकरोति—कवेः=अलङ्कारप्रवर्तका-

  

चार्य्यस्य प्रसिद्धया=परम्पराप्राप्तव्यवहारेण कवेः एतद्ग्रन्थकर्तुः प्रौढिवशेन=प्रगल्भकल्पनया वा। शब्दार्थयोः=वाच्यवाचकयोः। मनोहरः=चमत्कारजनकः सन्निवेशः=शब्दार्थयोर्विन्यासः। हारादिवत्=हारादिभूषणसदृशः अलङ्कारः=अलङ्कारनामा भवति। कविप्रसिद्धिप्रौढोक्तिजनितचमत्कृतिजनकशब्दार्थान्यतरसन्निवेशत्वमलङ्कारत्वम्। तत्र शब्दान्वयव्यतिरेकानुविधायित्वं शब्दालङ्कारत्वम्। यस्तदर्थवाचकपर्यायान्तरसन्निवेशेनालङ्कारो निवर्तते पर्यायपरिवर्तनं न सहते स शब्दालङ्कारः। परिवर्तनेऽपि यः पूर्ववदवतिष्ठते सोऽर्थालङ्कारः। इति शब्दार्थालङ्कारयोर्भेदकम्।

**हिन्दी**—कवि-सम्प्रदाय की परम्परा अथवा ग्रन्थकार की प्रौढोक्ति से शब्द और अर्थ की मनोहर स्थापना को अलङ्कार कहते हैं जैसे कामिनी के शरीर में संयोगसंबन्ध से रहते हुए हारादि अलङ्कार उसके शरीर की शोभा को बढ़ाते हैं उसी तरह शब्दार्थ शरीर वाले काव्य में संयोग सम्बन्ध से रहते हुए अनुप्रासादि शब्दालङ्कार और उपमा आदि अर्थालङ्कार काव्य की शोभा को बढ़ाते हैं। उसमें जो शब्द के अन्वयव्यतिरेक का अनुसरण करता है वह शब्दालङ्कार कहा जाता है अर्थात् पर्य्याय बदल देने से जिसकी सत्ता नहीं रहती वह शब्दाङ्कार होता है, अन्यथा अर्थालङ्कार जानना चाहिये ॥ १ ॥

स्वरव्यञ्जनसंदोहव्यूहामन्दोहदोहदा ।
गौर्जगज्जाग्रदुत्सेका छेकानुप्रासभासुरा ॥ २ ॥

विशेषेषु प्रथमं शब्दालङ्कारेषु छेकानुप्रासमाह—स्वरेति। अनु एकदा कथनोत्तरं यत्र त एव वर्णाः प्रकर्षेणाऽऽस्यन्ते सोऽनुप्रासः। छेकानुप्रासस्तु छेकानां विदग्धानां अनुप्रासः स च व्यञ्जनस्तोमानां स्वरस्तोमानां व्यूहेनावृत्तो भवति। उदाहरणमयमेव श्लोकः। दोहेत्याद्यावृत्तेः सत्त्वात्। जगदित्यादौ स्वरभेदेऽपि जकारगकारव्यञ्जनसारूप्यात्। छेका इत्यत्र स्वरस्तोमावृत्तेरपि सत्त्वात्। एकाराकारयोरावृत्तेः। श्लोकान्वयस्तु गीर्वाणी स्वरव्यञ्जनयोर्यः सन्दोहः स्तोमस्तद्व्यूहविशिष्टा तदावृत्तिमती सा छेकानुप्रासेन शोभना जगति जाग्रदुत्कर्षा अमन्दो य ऊहस्तद्दोहदेति। यद्वचः केवलवर्णावृत्त्या सम्पूर्णं पूरितं तत्र वृत्त्यनुप्रासः। यत्र केवलस्य वर्णस्य तत्र यथा मन्दोहेत्यादौ केवलस्य दकारादेरावृत्तिसत्त्वात्। यत्राऽऽनुपूर्वीविशेषविशिष्टनानावर्णावृत्तिस्तत्र छेकानुप्रासः ॥ २ ॥

**अन्वयः**—स्वरव्यञ्जनसन्दोहव्यूहा मन्दोहदोहदा जाग्रदुत्सेका गौः छेकानुप्रास-भासुरा भवति ।

**व्याख्या**—अलङ्कारेषु विचिख्यासितेषु शब्दार्थयोः पूर्वशब्दस्याभ्यर्हितत्वेन शब्दालङ्कारेषु प्रथमं छेकानुप्रासमाह—अनु = रसानुगतः वर्णानां प्रकर्षेण न्यासः अनुप्रासः । स्वराः=अकारादयः । व्यञ्जनानि=ककारादीनि च स्वरव्यञ्जनानि तेषां सन्दोहः=समूहः तस्य व्यूहः=आवर्तनं यत्र सा स्वरव्यञ्जनसन्दोहव्यूहा । मन्दः=सकृत् । ऊहः=तर्कः आवृत्तिः तस्य दोहदा जनयित्रीति मन्दोहदोहदा । जगति = संसारे जाग्रत्=प्रसिद्धः उत्सेकः=उत्कृष्टता यस्या सा जगज्जाग्रदुत्सेका । गौः = वाणी छेकाः = विदग्धाः तत्कृतोऽनुप्रासः छेकानुप्रासः तेन भासुरा शोभमाना भवति । यद्वा छेका आलयस्था पक्षिणः तेषामनुप्रासेन द्विर्भाषणेन भासुरा । एषां पक्षिणां द्विर्भाषितं भवति तत्साम्येन छेकानुप्राससंज्ञा अयं भावः । यत्र स्वर-समूहानां व्यञ्जनसमूहानाञ्च सकृत् साम्यं भवति तत्र छेकानुप्रासः । उदाहरणमपि श्लोकोऽयम् स्वरव्यञ्जनसन्तीत्यत्राकारस्वरावृत्तिः । दोहव्यूहेत्यत्र व्यञ्जनावृत्तिः । दोहदोहेत्यत्रोभयावृत्तिः । एवमत्र लक्षणसमन्वयः ।

**हिन्दी**—स्वर और व्यञ्जनों के समूह की आवृत्ति से युक्त एक करने वाली जगत्प्रसिद्ध वाणी छेकानुप्रास से शोभित होती है । अर्थात् जहाँ अनेक स्वर तथा अनेक व्यञ्जन की एक बार आवृत्ति की जाय वहाँ छेकानुप्रास होता है । जैसे इसी पद्य में स्वरव्यञ्जन समूह पर अकार स्वर की, दोहव्यूहा इस अंश में व्यञ्जनसमूह की और दोहदोहा यहाँ पर स्वर और व्यञ्जनसमूह की एक बार आवृत्ति होने के कारण छेकानुप्रास का उदाहरण हुआ । छेकविदग्ध वाचक है उनके द्वारा प्रयुक्त होने वाले अनुप्रास को छेकानुप्रास कहते हैं ।

आवृत्तवर्णसम्पूर्णं वृत्त्यनुप्रासवद्वचः ।
अमन्दानन्दसन्दोहस्वच्छन्दास्पदमन्दिरम् ॥ ३ ॥

यत्र केवलस्य वर्णस्य तत्र वृत्त्यनुप्रास इत्याह—आवृत्तेति । यत्राऽभिप्रायभेदेनोक्तस्यैव शब्दस्य प्रयोगः ॥ ३ ॥

**अन्वयः**—आवृत्तवर्णसम्पूर्णं अमन्दानन्दसन्दोहस्वच्छन्दास्पदमन्दिरम् वचः वृत्त्यनुप्रासवत् ( भवति ) ।

**व्याख्या**—आवृत्तश्चासौ वर्णः आवृत्तवर्णस्तेन सम्पूर्णम्=सम्पूरितम् आम्रेडितै-

वर्णैः सम्भृतम् । अमन्दः=प्रचुरः आनन्दः=प्रहर्षः तस्य सन्दोहः=समूहः तस्य स्वच्छन्दम्=अन्यनिरपेक्षम् आस्पदस्य=निवासस्य मन्दिरम्=गेहः । वचः=वचनम् । वृत्यनुप्रासवद्=वृत्यनुप्रासयुक्तं भवति । एकस्यापि वर्णस्य वारं वारमावृत्तिः रसानुगतावर्णरचनावृत्तिः तदनुकूलः वर्णानां प्रकर्षेण न्यासः=वृत्यनुप्रासः । उत्तरार्धे नदयोरसकृदावृत्यात्रोदाहरणमपि ।

हिन्दी—जहाँ एक अथवा अनेक वर्णों की बार-बार आवृत्ति हो वहाँ वृत्यनुप्रास होता है। उत्तरार्ध में न और द की अनेक बार आवृत्ति हुई है इसलिये वृत्यनुप्रास हुआ ।। ३ ।।

लाटानुप्रासभूर्भिन्नाभिप्राया पुनरुक्तता ।
यत्र स्यान्न पुनः शत्रोर्गर्जितं तज्जितं जितम् ।। ४ ।।

लाटलक्षणदेशविशेषवल्लभत्वाल्लाटानुप्रास इत्याह—लाटेति । उदाहरति—यत्रेति । अत्र द्वितीयं जितं सफलमित्यभिप्रायभेदात् ।। ४ ।।

अन्वयः—भिन्नाभिप्राया पुनरुक्तता लाटानुप्राससभूः ( उदाहरणम् ) यत्र शत्रोः गर्जितं पुनः न स्यात् तत् जितं जितम् ।

व्याख्या—लाटानुप्रासमभिधत्ते—भिन्नः अभिप्रायो यस्या सा भिन्नाभिप्राया=भिन्नतात्पर्य्यवती । पुनरुक्तता=शब्दानां पुनः प्रयोगः लाटानुप्रासस्य भूः लाटानुप्रासभूः=लानुप्रासस्थानम् । भिन्नाभिप्राययुक्तशब्दावृत्तिः लाटानुप्रासः । उदाहरणमाह—यत्र=यस्मिन् शत्रोः=वैरिणः गर्जितम् हुंकारः न स्यात् न भवत् एक वारं पराजितस्य पुनः युद्धोपक्रमो न स्यात् तत् जितम्=विजयः । जितम् = सफलो विजयः । अत्र जितं जितमिति पदयोः पुनरुक्तावपि द्वितीयजितशब्दस्य सफलजयरूपतात्पर्ये भेदः । छेकानुप्रासवृत्यनुप्रासयोर्वर्णावृत्तिरत्र लाटानुप्रासे पदानुवृत्तिरिति भेदः ।

हिन्दी—जहाँ भिन्न-भिन्न अभिप्राय के प्रकाशक पुनरुक्त पद हों वहाँ लाटानुप्रास होता है जैसे जहाँ पर शत्रु पुनः युद्ध करने का साहस न कर सके वही विजय विजय है अर्थात् सफल विजय है । यहाँ पर 'तत् जितं जितम्' में जित शब्द के पुनरुक्त होने पर भी दूसरे जित शब्द का सफल जितरूप तात्पर्य भिन्न है इसलिये लाटानुप्रास हुआ ।। ४ ।।

श्लोकस्यार्धे तदर्धे वा वर्णावृत्तिर्यदि ध्रुवा ।
तदा मता मतिमतां स्फुटानुप्रासता सताम् ।। ५ ।।

स्फुटाऽनुप्रासलक्षणमाह—श्लोकस्येति। यो वर्णः प्रथमाऽर्द्धावसाने स एव चरमाऽर्द्धावऽसाने इत्येकः। चतुर्षु चरणावसानेष्वेको वर्ण इत्यपरः। एवमष्टमांशेऽपि प्रान्तवर्णसाम्येन भेदो द्रष्टव्य इति भावः॥ ५॥

अन्वयः—श्लोकस्य अर्धे तदर्धे वा यदि वर्णावृत्तिः ध्रुवा तदा मतिमतां सतां स्फुटानुप्रासता मता।

व्याख्या—स्फुटानुप्रासमाह—श्लोकस्य = पद्यस्य। अर्धे = अर्धभागे तस्य अर्धभागस्यार्धे = पादार्धभागे वा = अथवा यदि = चेद् वर्णानामावृत्तिः वर्णावृत्तिः = वर्णानां पौनरुक्त्यम्। ध्रुवा = निश्चिता स्यात् = भवेत् तदा = तर्हि मतिमताम् = बुद्धिमताम्। सताम् = सज्जनानाम् स्फुटानुप्रासता = स्फुटानुप्रासत्वम् मता = स्वीकृता। स्फुटानुप्रासो भवति। श्लोकार्धे वर्णावृत्तिर्द्वेधा भवति। आदितोऽन्तपर्यन्ता प्रथमा, पादावसाने स एव वर्ण इति द्वितीया। श्लोकार्धार्धे पादे तु एकविधैव। उदाहरणमिदमेव पद्यम्। अत्रोत्तरार्धे तकारमकारयोरावृत्तिरादितोऽन्तपर्यन्ता नियतेति प्रथमो भेदः। श्लोकपूर्वार्धे वेत्यस्य तथा श्लोकोत्तरार्धे तामित्यस्य वर्णस्य सत्वात् द्वितीयभेदोदाहरणम्। प्रथमपादे अर्धे अर्धे इति रेफयुक्तधकारावृत्या स्फुटानुप्रासता।

हिन्दी—यदि श्लोक के पूर्वार्ध अथवा उत्तरार्ध में अथवा प्रत्येक पाद में वर्णों की आवृत्ति हो तो उसको बुद्धिमान् लोग स्फुटानुप्रास कहते हैं। श्लोकार्ध में वर्णों की आवृत्ति दो प्रकार की होती है—एक आदि से अन्त तक वर्णों की आवृत्ति तथा दूसरी चरण के अन्त में उसी वर्ण का होना इसका उदाहरण भी यही श्लोक है—श्लोक के उत्तरार्ध में आदि से अन्त पर्यन्त तकार-मकार की आवृत्ति है यह पहला भेद हुआ। पूर्वार्ध में वा शब्द की तथा उत्तरार्ध में ताम् शब्द की समानता दूसरे भेद का उदाहरण है। प्रत्येक पाद का एक ही भेद होता है जैसे यहाँ अर्धे अर्धे की आवृत्ति है॥ ५॥

उपमेयोपमानादावर्थानुप्रास इष्यते।
चन्दनं खलु गोविन्दचरणद्वन्द्ववन्दनम्॥ ६॥

अर्थाऽनुप्रासमाह—उपमेयेति। उदाहरति—चन्दनमिति। नाऽत्र छेकानुप्रासादिष्विव सान्निध्यकृतं रमणीयत्वं चन्दनवन्दनयोर्व्यवधानस्य सत्वात्। नाऽपि स्फुटानुप्रास इव नियतवर्णावृत्त्या किन्त्वर्थसन्निवेस्तत्र

चारुता। आवृत्तेश्चन्दनवन्दनयोर्व्यवधानस्योपमानोपमेययोर्भावेन सन्निधेः सत्त्वादिति भावः ॥ ६ ॥

**अन्वयः**—उपमानोपमेयादौ ( यदि वर्णावृत्तिर्ध्रुवा ) तदा अर्थानुप्रास इष्यते गोविन्दचरणद्वन्द्ववन्दनं खलु चन्दनम्।

**व्याख्या**—अर्थानुप्रासमाह—उपमेयम् = वर्णनीयं प्रकृतम्। उपमानम् = अवर्ण्यम् उपमेयञ्चोपमानं चोपमेयोपमाने तयोः उपमेयोपमानयोः = वर्ण्यावर्ण्ययोः प्रस्तुताप्रस्तुतयोः यदि वर्णावृत्तिः ध्रुवा = नियता तदा अर्थानुप्रासः = अर्थानुप्रासालङ्कारः। उपमेयोपमानादौ वर्णसमानत्वे अर्थानुप्रासो भवति। आदिना रूपकादि ग्रहणम्। उदाहरणम्—गोविन्दस्य = भगवतः श्रीकृष्णस्य चरणयोः = पादयोः द्वन्द्वम् = युगलम् तस्य वन्दनम् = प्रणामः इति गोविन्दचरणद्वन्द्ववन्दनम् खलु = हि चन्दनम् = भद्रश्रीः। यथा चन्दनं तापशामकमाह्लादजनकञ्च भवति तथा गोविन्दचरणद्वन्द्ववन्दनमपि तापत्रयनाशनम् चित्तशान्तिद्वारा आनन्दजनकञ्च भवति। अत्र चन्दन-गोविन्दचरणद्वन्द्ववन्दनयोरुपमेयोपमानभावः स्फुट एव। तत्र नकार-दकारयोरावृत्तिश्च वर्तते इत्यत्रार्थानुप्रासः।

**हिन्दी**—जहाँ उपमेय और उपमान में वर्ण की समानता हो वहाँ अनुप्रास होता है। उदाहरण—जैसे गोविन्द के चरणद्वन्द्व का वन्दन चन्दन के समान है यहाँ उपमेय चरणवन्दन और उपमान चन्दन में न द वर्णसाम्य होने के कारण अर्थानुप्रास हुआ ॥ ६ ॥

पुनरुक्तप्रतीकाशं पुनरुक्तार्थसन्निभम्।
अंशुकान्तं शशी कुर्वन्नम्बरान्तमुपैत्यसौ ॥ ७ ॥

पुनरुक्तप्रतीकाशमाह—पुनरिति। यत्राऽऽपातत एकोऽर्थः प्रतीयते। पुनरुक्तप्रतीकाश इत्यर्थः। अत्रांशुभिः कान्त आकाशमिति द्वयोरर्थभेदेऽपि वसनान्तरूपैकार्थप्रतीतेरिति भावः ॥ ७ ॥

**अन्वयः**—पुनरुक्तार्थसन्निभम् पुनरुक्तप्रतीकाशं ( आचार्या विदुः ) असौ शशी अम्बरान्तम् अंशुकान्तं कुर्वन् उपैति।

**व्याख्या**—पुनरुक्तप्रतीकाशमाह—पुनः = भूयः उक्तः = कथितः अर्थः अभिधेयो यस्मिन् तत् पुनरुक्तार्थं पुनरुक्तार्थेन सन्निभम् = सदृशम् इति पुनरुक्तार्थसन्निभम्। प्रति काशते इति प्रतीकाशः पुनरुक्तवत्प्रतीकाशः तन्नामा अलङ्कारः स्यात्।

उदाहरणम्—असौ=पुरो दृश्यमानः शशी अम्बरान्तम्=आकाशमध्यम् अंशुभिः कान्तम् अंशुकान्तम्=स्वकिरणसुन्दरं कुर्वन् उपैति=आगच्छति। अत्रोदाहरणे अंशुकान्तम् अम्बरान्तमनयो पदयोरापाततः वस्त्रप्रान्तार्थकत्वेन पुनरुक्तता प्रतीयते विचारे तु अम्बरान्तपदस्याकाशवाचकत्वम् अंशुकान्तपदस्य किरणकान्तार्थ-प्रत्ययः यथार्थतया प्रतीयते। अतः पुनरुक्तप्रतीकाशः पुनरुक्तसदृशः न तु वस्तुतः पुनरुक्तोऽर्थो यत्र स पुनरुक्तप्रतीकाश नामाऽलङ्कारः।

हिन्दी—जहाँ ऐसे शब्द का प्रयोग हो जिनका सुनने में आपाततः एक-सा अर्थ प्रतीत हो पर विचारने पर वस्तुतः भिन्न-भिन्न अर्थ हो वहाँ पुनरुक्तप्रतीकाश नामक अलंकार होता है। उदाहरण—यह शशी अम्बरान्त ( आकाशमध्य ) को अंशुकान्त ( किरणों से सुन्दर ) करता हुआ आ रहा है। अम्बर और अंशुक शब्द आपाततः दोनों ही वस्त्ररूप एक अर्थवाले प्रतीत होते हैं परन्तु वस्तुतः अम्बर का आकाश अर्थ और अंशु-कान्त=किरण से सुन्दर अर्थ होता है—इसलिये इस अलंकार का नाम पुनरुक्तप्रतीकाश है। इसको साहित्यदर्पण में पुनरुक्तवदाभास कहा गया है—'पुनरुक्तवदाभासः स भिन्नाकार शब्दगः' इति ॥ ७ ॥

आवृत्तवर्णस्तवकं स्तवकन्दाङ्कुरं कवेः।
यमकं प्रथमा धुर्यमाधुर्यवचसो विदुः ॥ ८ ॥

वर्णानां समूहो यत्र सर्वथा सम आवर्त्यते तत्र यमकम्। यथाऽत्रैव स्तावकं माधुर्यमाधुर्येति कवेः स्तुतिकन्दस्याङ्कुरं प्रथमा विदुः। धुर्यमाधु-र्यवचस इत्याह—आवृत्तेति। यमकस्य परे प्रभेदा ग्रन्थान्तरादवगन्तव्याः। इदं तु अन्तादियमकम् ॥ ८ ॥

अन्वय—धुर्यमाधुर्यवचसः प्रथमाः आवृत्त वर्णस्तवकं कवेः स्तव कन्दाङ्कुरं यमकं विदुः।

व्याख्या—यमकालङ्कारमाह—माधुर्यं वचसि येषां ते माधुर्यवचसः धुर्याश्च ते माधुर्यवचसः धुर्यमाधुर्यवचसः = धूरीण मधुर वाच=प्रथमा=मुख्याः पूर्वा-चार्याः। आवृत्तः=पुनरुक्तः वर्णानां स्तवकः=अक्षराणां समूहः यस्मिन् तत् आवृत्त-वर्णस्तवकम्। कवेः=काव्यकर्तुः। स्तवः=स्तुतिः तद्रूपो यः कन्दः बीजं तस्य अङ्कुरं प्ररोहः तत् स्तवकन्दाङ्कुरम्। यमकः=यमकनामानमलंकारम् विदुः= कथयन्ति। उदाहरणं यथा अस्मिन्नेव पद्ये पूर्वार्धे स्तवकं उत्तरार्धे माधुर्यं माधुर्य।

क्वचिद् वर्णभेदेऽपि अतिसाम्येन यमकं भवति । तदुक्तम्—

'यमकादौ भवेदैक्यं रलयोर्डलयोर्बवोः ।
शषयो नणयोश्चान्ते सविसर्गाविसर्गयोः ॥
सविन्दुकाबिन्दुकयोः स्यादभेदप्रकल्पनम् ॥

हिन्दी—मधुर भाषी विद्वानों में श्रेष्ठ प्राक्तन अलङ्कारशास्त्रियों ने कवि की प्रशंसा का कारण अनेक वर्णों की आवृत्ति को यमक कहा है, जैसे इसी पद्य के पूर्वार्ध में स्तवक स्तवक, उत्तरार्ध में माधुर्य माधुर्य अनेक वर्णों की आवृत्ति है इसलिये यमक अलङ्कार हुआ । यमक अलङ्कार में कहीं दोनों शब्द सार्थक होते है, कहीं एक सार्थक और एक निरर्थक और कहीं दोनों निरर्थक होते हैं । इसलिये वर्णसाम्यमात्र इसका प्रयोजक है । यमक शब्द का अर्थ है—यमौ सह जाता विष— यमकम् । ( इव प्रतिकृतौ ) से कन् प्रत्यय हुआ है ॥ ८ ॥

काव्यवित्प्रवरैश्चित्रं खड्गबन्धादि लक्ष्यते ।
तेष्वाद्यमुच्यते श्लोकद्वयीसज्जनरञ्जिका ॥ ९ ॥

चित्रं काव्यं खड्गबन्धादिभेदभिन्नं, तत्र खड्गबन्धमुदाहरति—काव्यविदिति । अमुना श्लोकद्वयेन स्थलविशेषरहिताक्षरेण खड्गबन्धो भवति तल्लिखनक्रमो लिखितखड्गबन्धादवसेयः । यत्संख्याकस्य वर्ण-स्याऽऽवृत्त्या अस्य खड्गबन्धता साऽपि ग्रन्थान्तरादवसेया । बन्धान्तरं तु मूलएवोपेक्षितत्वादस्माभिरप्युपेक्षितमिति ॥ ९ ॥

अन्वयः—काव्यवित्प्रवरैः खड्गबन्धादिचित्रं लक्ष्यते तेषु आद्यम् सज्जनरञ्जिका श्लोकद्वयी उच्यते ।

व्याख्या—चित्रालङ्कारं लक्षयति—काव्यं विदन्ति इति काव्यविदः तेषां प्रवरैः काव्यवित्प्रवरैः = श्रेष्ठालङ्कारकैः खड्ग इव बन्धः = रचना यस्मिन् सः खड्गबन्धः स आदिर्यस्य तत् । आदिपदेन पद्मबन्धादीनामपि ग्रहणम् । एवंभूता रचना चित्रम् = चित्रनामकम् काव्यम् लक्ष्यते = उच्यते । तेषु = चित्रकाव्येषु । आद्यम् = प्रथमम् । सज्जनरञ्जिका = सहृदयाह्लादिनी । श्लोकयो द्वयी श्लोक-द्वयी पद्यद्वयात्मकम् आद्यम् = खड्गबन्धाख्यं काव्य उच्यते । अत्र श्लोकद्वयेन क्वचिल्लिखिताक्षरेण खड्गाकारः समुल्लसति ।

हिन्दी—काव्यमर्मज्ञ प्राचीन साहित्यकारों ने खड्गबन्धादि को चित्रकाव्य

कहा है। उनमें सज्जनों को प्रसन्न करनेवाले खड्गबन्ध को दो श्लोकों में कहते हैं ॥ ९ ॥

कामिनीव भवेत्खड्गलेखा चारुकरालिका।
काश्मीरसेकरक्ताङ्गी शत्रुकण्ठान्तिकाश्रिता ॥ १०

कामिनीपक्षे चारुणी करालिके यस्याः, काश्मीरसेकेन रक्ताङ्गी खड्गलेखापक्षे चारुकरालिका काश्मीरसेकादारक्ताङ्गीत्यभिप्रायः ॥ १० ॥

अन्वयः— हे राजन् भवत्खड्गलेखा कामिनी इव चारुकरालिका काश्मीरसेका रक्ताङ्गी शत्रुकण्ठान्तिकाश्रिता।

व्याख्या —( हे राजन् ) भवत्खड्गलेखा=त्वदसि शत्रोः कामिनी इव=नायिकेव। सज्जनरञ्जिका = सहृदयमनोहारिणी अस्ति। नायिकापक्षे—करी च आलिकश्चानयोः समाहारः=करालिकं चारुकरालिकं यस्या सा चारुकरालिका= सुन्दरहस्तललाटा। काश्मीरस्य = कुंकुमस्य सेको यस्यां सा काश्मीरसेका। रक्तमङ्गं यस्याः सा रक्ताङ्गी रक्तशरीरा अथवा काश्मीरसेकेन आरक्तमङ्गं यस्या सा काश्मीरसेकारक्ताङ्गी = कुंकुमसेकेन किञ्चित् रक्तशरीरा। शत्रोः —कण्ठान्तिकाम्=वैरिकण्ठसमीपम्। आश्रिता=प्राप्ता। खड्गपक्षे—चारुश्चासौ करालिका च चारुकरालिका=शोभना तीक्ष्णा च शत्रुकण्ठान्तिकाश्रिता पूर्ववत् काश्मीरसेकवत् रक्ताङ्गा रुधिरेण रक्तवर्णा अस्ति। इयं श्लोकद्वयी कामिनीव सहृदयानामाह्लादिका भवतु।

हिन्दी—शत्रु कामिनी की तरह आपकी खड्गलेखा सज्जनों का अनुरञ्जन करनेवाली है। कामिनी सुन्दर हाथ और ललाटवाली है। कुंकुम लगाने से लाल अङ्गवाली शत्रु के कण्ठ को आलिङ्गन किये है। आपकी खड्गलेखा भी सुन्दर और तीक्ष्ण है। कुंकुम सिक्त की तरह खून वाले वर्ण वाली है। शत्रु के कण्ठ के समीप लगी हुई है ॥ १० ॥

उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः।
हृदये खेलतोरुच्चैस्तन्वङ्गीस्तनयोरिव ॥ ११ ॥

अर्थाऽलङ्कारेषु प्रथममुपमामाह—उपमेति। यत्र द्वयारर्थयोः सादृश्यं प्रतीयते तत्रोपमा कयोरिव स्तनयोरिवादाहरणमप्येतदेव। द्वयोरित्यनेनोपमेयस्य स्तनयोरित्यनेनोपमानस्य प्रतीताविवेत्यनेन प्रतीयमानसादृश्यप्रतीतेरिति भावः ॥ ११ ॥

अन्वयः—यत्र हृदये खेलतोः उच्चैः तन्वङ्गीस्तनयोरिव द्वयोः सादृश्यलक्ष्मी उल्लसति ( सा ) उपमा ।

व्याख्या —शब्दालङ्कारानन्तरविचिख्यासितेष्वर्थालङ्कारेषु प्रथमम् अनेकालङ्कारजीवातुरूपामुपमां व्याख्याति—यत्र=यस्मिन् अलङ्कारे हृदये = वक्षसि खेलतोः=क्रीडतोः । उच्चैः=उन्नतयोः तनु अङ्गं यस्या सा तन्वङ्गी तस्या स्तनौ तयोः तन्वङ्गीस्तनयः = कृशाङ्गीकुचयोरिव । द्वयोः = वर्णनीययोः सादृश्यलक्ष्मी=समानता शोभा, उल्लसति=विराजते सा उपमा अलङ्कारः । उपमायां चत्वारः पदार्था भवन्ति-उपमेयम्, उपमानम्, साधारणो धर्मः उपमावाचकं पदम् उपमातुं योग्यमुपमेयम्=वर्णनीयं प्रस्तुतम्, उपमीयतेऽनेनेत्युपमानं उत्कृष्टधर्मयुक्त प्रसिद्धः पदार्थः । उपमेयोपमाननिष्ठः गुणक्रियादिरूपो धर्मः सामान्यधर्मः उपमावाचक पदमिवादि समेषामेतेषां सद्भावे पूर्णा उपमा भवति । एतेषु एकस्य द्वयो त्रयाणां वानुपादाने लुप्तोपमा भवति । अत्र द्वयोरित्युपमेयपदम्, तन्वङ्गीस्तनयोरित्युपमानम्, सादृश्यलक्ष्मीरिति साधारणो धर्मः इवेत्युपमावाचकं पदम्, तेनात्र द्वयोरुपमानोपमेययोः स्तनयोरिव सादृश्यप्रतीतेः पूर्णोपमालङ्कारः । इयमुपमा नटीव काव्यरङ्गे भङ्ग्या अनेकालङ्काररूपं धारयति । अत इयमनेकालङ्कारजीवातुः ।

'उपमैका शैलूषी सम्प्राप्ता चित्रभूमिकाभेदान् ।
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः ॥'

इत्युक्तमप्पय्यदीक्षितः ।

हिन्दी —सुन्दरी नायिका के वक्षःस्थल पर प्रस्फुटित ऊँचे स्तन की तरह जहां उपमेय और उपमान की समानता प्रतीत हो वहाँ उपमा अलङ्कार होता है । इसी श्लोक का उत्तरार्द्ध उदाहरण है । जैसे— द्वयोः ( दो पदार्थों का ) यह पद उपमेय वाचक है, स्तनयोः यह पद उपमान वाचक है, सादृश्यलक्ष्मी यह पद साधारण-धर्मवाचक है, इव उपमावाचक है । जिससे दो पदार्थों की कामिनी स्त्री के स्तन की तरह सादृश शोभा प्रतीत होती है, यह अर्थ होता है । यहाँ उपमा की सभी सामग्री होने के कारण पूर्वोपमा अलङ्कार हुआ । इनमें एक, दो अथवा तीन पदार्थों का लोप होने से लुप्तोपमा होती है जिसके अनेक भेद अन्यत्र वर्णित हैं उसे वहीं से जानना चाहिये ॥ ११ ॥

**उपमानोपमेयत्वे यत्रैकस्यैव जाग्रतः ।**
**इन्दुरिन्दुरिवेत्यादौ भवेदेवमनन्वयः ॥ १२ ॥**

यत्रोपमानोपमेययोरभेदो यथेन्दुरिन्दुरिवेत्यत्र । तत्राऽनन्वय इत्याह—उपमानेति ॥ १२ ॥

अन्वयः— यत्र एकस्यैव इन्दुः इन्दुरिवेत्यादौ उपमानोपमेयत्वे जागृतः ( तत्र ) अनन्वयः भवेत् ।

व्याख्या—अनन्वयं लक्षयति—यत्र = यस्मिन् स्थले, एकस्य = वर्णनीयस्य पदार्थस्य इन्दुः = चन्द्रः इन्दुरिव = चन्द्र इव । उपमानोपमेयत्वे उपमानकम् उपमेयत्वम् जागृतः भवत तत्र अनन्वयः = अनन्वयनामाऽलङ्कारो भवति । अत्रैकस्यैवेन्दोरुपमेयत्वमुपमानञ्चास्तीत्यनन्वयालङ्कारः । उदाहरणान्तरम्—आदिकाव्ये वाल्मीकीये रामायणे—'गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव ॥'

हिन्दी—जहाँ पर एक ही पदार्थ उपमान और उपमेय दोनों ही हो जाता है उसको अनन्वय अलङ्कार कहते हैं । जैसे ( इन्दुः इन्दुरिव ) चन्द्रमा चन्द्रमा की तरह है । वाल्मीकीय रामायण में आकाश, सागर, रामरावण युद्ध के समान कोई दूसरा नहीं है । उनके उपमान वे ही हैं ॥ १२ ॥

पर्यायेण द्वयोस्तच्चेदुपमेयोपमा मता ।
धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि ॥ १३ ॥

यत्र उपमेयस्यैवोपमानता सा उपमेयोपमा । उदाहरणं धर्म इति । उक्तक्रमेण प्रागुक्तस्य धर्मस्योपमेयस्यैवोत्तरत्र धर्म इवेत्युपमानता । तथाऽर्थस्योपमानस्यैव अर्थ इति उपमेयता अत्र प्रतिभाति । अत्र धर्मो धर्म इव अर्थो अर्थ इवेत्युक्तं, अनन्वयेऽतिव्याप्तिप्रसक्तिरित्यतो व्यवहितान्वयप्रसक्तिरित्यतश्च पर्यायेत्युक्तम् । पर्यायश्चप्रदर्शितोद्देश्यविधेयभावः ॥ १३ ॥

अन्वयः—द्वयोः पर्यायेण तत् चेत् स्यात् ( तदा ) उपमेयोपमा स्यात् । त्वयि धर्मः अर्थ इव पूर्णश्रीः ( तथा ) अर्थः धर्म इव ( पूर्णश्रीः ) ( अस्ति ) ।

व्याख्या—उपमेयोपमां निर्वक्ति—द्वयोः = भिन्नयोः पदार्थयोः पर्यायेण अर्थात् वाक्यद्वये तद् = उपमानत्व उपमेयत्वं च चेत् = यदि स्यात् = भवेत् । तर्हि उपमेयोपमा अलङ्कारः मता = मतः स्यात् । उपमेयेनोपमा उपमेयोपमा, अर्थात् पूर्ववाक्ये यदुपमेयं तदेवोत्तरवाक्ये उपमानं स्यात् तत्रायमलङ्कारः । अनन्वये द्वितीयसब्रह्मचारिवस्तुनिषेधः । अत्रोपमेयोपमायां तृतीयसदृशवस्तुव्यवच्छेदः ।

उदाहरणम्—हे राजन् ! त्वयि=भवति धर्मः=विहितकर्मजन्योऽदृष्टविशेषः । अर्थः=धनमिव । पूर्णश्रीः=पूर्णा श्रीर्यस्य स पूर्णश्रीः=अशेषशोभावान् । अर्थः=धनञ्च धर्म इव पूर्णश्रीः वर्तते । तृतीयमेतयोरुपमानं नास्ति ।

अत्र प्रथमवाक्ये उपमेयं धर्मः, स एव द्वितीयवाक्ये उपमानम् इत्युपमेयोपमा अलङ्कारः ।

हिन्दी—जहाँ दो पदार्थों को क्रम से दो वाक्यों में उपमेय और उपमान बना दिया जाय अर्थात् पूर्ववाक्य में जो उपमेय है उसीको दूसरे वाक्य में उपमान बना दिया जाय वहाँ उपमेयोपमालङ्कार होता है । इसका उत्तरार्ध ही उदाहरण है—जैसे हे राजन् ! आपमें धर्म अर्थ की तरह पूरा शोभता है और अर्थ धर्म के तरह पूरा शोभता है ।। १३ ।।

विख्यातस्योपमानस्य यत्र स्यादुपमेयता ।
इन्दुर्मुखमिवेत्यादौ स्यात्प्रतीपोपमा तदा ।। १४ ।।

यत्रोपमानस्योपमेयता यथेन्दुर्मुखमिवेत्यत्र सा प्रतीपोपमेत्याह—विख्यातस्येति ।। १४ ।।

अन्वयः—यत्र विख्यातस्य उपमानस्य इन्दुः मुखमिव इत्यादौ उपमेयता स्यात् तदा प्रतीपोपमा स्यात् ।

व्याख्या—प्रतीतोपमा व्याचष्टे—यत्र=यस्मिन् स्थले विख्यातस्य=प्रसिद्धस्य उपमानस्य = उत्कृष्टगुणत्वेन प्रसिद्धस्य उपमानस्य इन्दुः = चन्द्रः मुखमिव = आननमिव इत्यादौ = एवमादिस्थले उपमेयता स्यात् तदा प्रतीपोपमा नामकः अलङ्कारः भवति । इन्दु पदं उपमानत्वेन प्रसिद्धं तदिह उपमेयत्वेन वर्णितमिति प्रतीपालङ्कारः ।

हिन्दी—प्रतीपोपमा अलङ्कार वहाँ होता है जहाँ प्रसिद्ध उपमान को उपमेय बना दिया जाता है । जैसे चन्द्रमा मुख के तरह है । 'इन्दुर्मुखमिव' इस वाक्य में जिस तरह कहा गया है ।। १४ ।।

उपमाने तु लीलादिपदाढ्ये ललितोपमा ।
त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः ।। १५ ।।

यत्रोपमेये उपमानलीला वर्ण्यते तदा ललितोपमेत्याह—उपमानेति । आढ्ये युक्त इत्यर्थः । त्वन्नेत्रेत्युदाहरणम् ।। १५ ।।

अन्वयः—उपमाने लीलादिपदाढ्ये तु ललितोपमा (स्यात्) त्वन्नेत्रयुगलं नीलाम्बुजन्मनोः लीलां धत्ते ।

व्याख्या— ललितोपमां लक्षयति—उपमाने=उपमानत्वेन, कल्पिते=अप्रस्तुते लीलादिपदाढ्ये तु ललितोपमालङ्कारो भवति । उदाहरणम्—तव नेत्रयोः युगलं नेत्रयुगलं=नेत्रद्वयम्, अम्बुनोर्जन्म ययोस्ते अम्बुजन्मनी, नीले च ते अम्बुजन्मनी तयोः नीलाम्बुजन्मनोः=नीलकमलयोः, लीलाम्=विलासं, धत्ते=धारयति ।

हिन्दी—उपमान के लीला आदि पद से युक्त रहने पर ललितोपमा नाम का अलङ्कार होता है । जैसे— तुम्हारे दोनों नयन नीलकमल की लीला को धारण करते हैं । यहाँ उपमान लीला पद से युक्त है (कमल की लीला को) इसलिये ललितोपमा अलङ्कार हुआ ॥ १५ ॥

अनेकस्यार्थयुग्मस्य सादृश्यं स्तबकोपमा ।
श्रितोऽस्मि चरणौ विष्णोर्भृङ्गस्तामरसं यथा ॥ १६ ॥

अनेकस्येति । यत्रोपमानोपमेययोरनेकत्वं तत्र स्तबकोपमा । यथा श्रित इत्यादौ । अत्र स्वापेक्षया भृङ्गः श्रीपतिचरणापेक्षया तामरसमुपमानत्वेनोपात्तमित्युपमानोपमेययोरनेकत्वम् । अर्थयुग्मस्योपमानोपमेयस्येति भावः ॥ १६ ॥

अन्वयः—अनेकस्य अर्थयुग्मस्य (यत्र) सादृश्यम् (तत्र) स्तबकोपमा भवति । उदाहरणम्— भृङ्गः तामरसं यथा विष्णोः चरणौ श्रितोऽस्मि ।

व्याख्या—स्तबकोपमां व्याचष्टे—अनेकस्य=एकाधिकस्य अर्थयोः युग्मं अर्थयुग्मं तस्य अर्थयुग्मस्य=अर्थद्वयस्य यत्र सादृश्यम्=समानता तत्र स्तबकोपमा नामा अलङ्कारः भवति । उदाहरणम्—यथा भृङ्गः=भ्रमरः तामरसम्=कमलम् यथा=इव विष्णोः=नारायणस्य, चरणौ=पादौ, श्रितोऽस्मि=प्रपन्नोऽस्मि । अत्रास्मत्पदस्य भृङ्गमुपमानम् चरणयोश्च तामरसम् एते उपमानोपमेयद्वये आश्रयाश्रोपमेति स्तबकोपमालङ्कारः ।

हिन्दी—जहाँ अनेक उपमानोपमेयद्वय का सादृश्य हो वहाँ स्तबकोपमा अलंकार होता है । जैसे—भ्रमर कमल का आश्रय करता है वैसे मैं विष्णु के चरणों का आश्रय करता हूँ । यहीं पर अहं का भ्रमर उपमान है और चरण का कमल

उपमान है। इस उपमानोपमेय युगल का सादृश्य है इसलिए यहाँ स्तबकोपमा अलंकार हुआ ॥ १६ ॥

स्यात्संपूर्णोपमा यत्र द्वयोरपि विधेयता।
पद्मानीव विनिद्राणि नेत्राण्यासन्नहर्मुखे ॥ १७ ॥

यत्रोपमानोपमेययोर्द्वयोरपि विधेयता सा सम्पूर्णोपमा। यथा पद्मानीवेत्यादौ। अत्रोभयस्याप्यासन्निति क्रियान्वयेन विधेयत्वादित्याह --स्यादिति ॥ १७ ॥

**अन्वयः**--- यत्र द्वयोः अपि विधेयता स्यात् (तत्र) सम्पूर्णोपमा स्यात् ( उदाहरति ) अहर्मुखे पद्मानि इव नेत्राणि विनिद्राणि आसन्।

**व्याख्या**—सम्पूर्णोपमामाह—यत्र = यस्मिन् स्थले द्वयोः = उपमानोपमेययो अपि विधेयता = वर्णनीयता स्यात् तत्र=स्थले सम्पूर्णोपमा नामा अलंकारः स्यात्। उदाहरति—अहर्मुखे = प्रातःकाले पद्मानि = कमलानि इव नेत्राणि = सर्वेषां नयनानि विनिद्राणि = विकसितानि आसन् = अभवन्। अत्र प्रातःकाले कमलानां विकासः नेत्राणामुन्निद्रता च द्वयमपि प्रस्तुतमेव। अतोऽत्र सम्पूर्णोपमा अलंकारः।

**हिन्दी**—जहाँ उपमान और उपमेय दोनों वर्णन के योग्य प्रस्तुत रहें वहाँ सम्पूर्णोपमा अलंकार होता है। 'पद्मानीव' यहाँ जैसे प्रातःकाल में कमल के तरह नेत्रविनिद्र = विकसित एवं निद्रारहित हो गये। यहाँ पर प्रातःकाल में दोनों का उपमान और उपमेय का विकास वर्णन प्रस्तुत है इसलिये सम्पूर्णोपमा अलंकार हुआ ॥ १७ ॥

यत्रोपमानचित्रेण सर्वथाप्युपरज्यते।
उपमेयमयी भित्तिस्तत्र रूपकमिष्यते ॥ १८ ॥

उपमानचित्रेण यत्रोपमेयमयी भित्तिः सर्वथोपरज्यते तद्रूपकम्। उदाहरणमप्येतदेव। उपमानमेव चित्रमिति उपमेयमय्येव भित्तिरिति च रूपकप्रतीतेरित्यर्थः। यत्रोपमानोपमेययोर्भेदो न प्रतीयते तद्रूपकमिति भावः ।१८।

**अन्वयः**— यत्र उपमानचित्रेण उपमेयमयी भित्तिः सर्वथा उपरज्यते तत्र रूपकं भवति।

**व्याख्या**—रूपकालङ्कारमाह---यत्र = यस्मिन् स्थले उपमानचित्रेण = अप्रस्तुतालेख्येन, उपमेयमयी = प्रस्तुतवर्ण्यमानरूपाभित्तिः = कुड्यम् उपमेय-

स्वरूपम्। सर्वथा=पूर्णरूपेण उपरज्यते=उपरता=आच्छादिता भवति तत्र स्थले रूपकालङ्कारः भवति। उदाहरणमपीदमेव। उपमानमेव चित्रं मयूरव्यंसका-दित्वात् समासः। समस्ताभेदरूपकोदाहरणे उपमाने चित्रतादात्म्यस्य उपमेयमप्येव भित्तिः स्वार्थमयतया व्यस्तरूपकोदाहरणे उपमेये भित्तितादात्म्यस्य चारोपात् रूपका-लङ्कारः। यत्र सादृश्यातिशयप्रतीत्यर्थमुपमानोपमेययोरभेदारोपः तत्र रूपकालङ्कारो भवति। अत्रोपमानस्य चित्ररूपता उपमेयस्य च भित्तिरूपता स्फुटं प्रतीयते।

हिन्दी—जहाँ उपमानरूपी चित्र से उपमेयरूपी भित्ति रंग दी जाती है अर्थात् उपमान और उपमेय में भेद का ज्ञान नहीं होता है वहाँ रूपक अलङ्कार होता है। जैसे यहीं पर उपमान को चित्र से अभिन्न और उपमेय को भित्ति से अभिन्न रूप से वर्णन किया गया इसलिये यहाँ रूपक अलङ्कार हुआ ॥ १८ ॥

समानधर्मयुक्साध्यारोपात्सोपाधिरूपकम् ।
उत्सिक्तक्षितिभृल्लक्ष्यपक्षच्छेदपुरन्दरः ॥ १९ ॥

यत्र समानधर्मोत्तरमुपमानवाचकशब्दप्रयोगस्तत्र सोपाधिकरूपक-मित्याह—समानेति। रूपणोयस्याऽन्ते रूपकाभिधानं मुखचन्द्रेत्यादौ। अत्र तु रूप्यरूपकसाधारणस्य धर्मस्य प्रान्ते उत्सिक्तेत्यादिनोभयसाधारण-धर्माभिधानोत्तरं पुरन्दर इति रूपकाभिधानादिति भावः। साध्यारोपात् कथनात् उत्सिक्तेत्यादावथंभेदेनोभयसाधारणधर्मप्राप्तिः स्फुटैव ॥ १९ ॥

अन्वयः—समानधर्मयुक् साध्यारोपात् सोपाधिरूपकम्। ( उदाहरति ) उत्सिक्तक्षितिभृल्लक्ष्यपक्षच्छेदपुरन्दरः।

व्याख्या—सोपाधिकरूपमाह—समानश्चासौ धर्मः समानधर्मः युज्यते अनेनेति योगः तेन साध्यस्यारोपस्तस्मात् समानधर्मयुक् साध्यारोपात् = तुल्यधर्मसम्बन्ध-सम्पाद्यारोपात्। समानधर्मसम्बन्धेन यत्र प्रस्तुते उपमानारोपः तत् सोपाधिरूप-कम्। उदाहरणम् यथा—उत्सिक्ताः=त्यक्तमर्यादा क्षितिभृतः राजान एव उत्सिक्ताः उच्चाः क्षितिभृतः=पर्वताः तेषां लक्ष्यभूतानां पक्षाः साहाय्याः एव पक्षा पतत्राणि तेषां छेदे पुरन्दरः इन्द्रो भवान् अस्ति। अत्र शत्रुभूतराजसु तत्साहाय्येषु च श्लेष-महिम्ना क्रमेण पर्वतत्वतत्पक्षत्वारोपात् प्रस्तुत राजनि पुरन्दरत्वारोपः साध्य इत्यत्र सोपाधिरूपकम्। एतदेव रूपकं साहित्यदर्पणे परम्परितरूपकनाम्ना निर्दिष्टम्। लक्षितञ्च 'यत्र कस्यचिदारोपः परारोपणकारणम्। तत्परम्परितम्' इति।

हिन्दी—जहाँ किसी समान धर्म शब्द अथवा अर्थ का एक जगह आरोप का कारण हो उसको सोपाधिरूपक कहते हैं। उदाहरण जैसे—हे राजन्! आप निर्माणादि ( भूभृत् ) राजारूप क्षितिभृत पहाड़रूप लक्ष्य के ( पक्ष ) सहायक रूप पंख को काटने वाले पुरन्दर इन्द्र हैं। यहाँ पर श्लेष्म द्वारा क्षितिभृत्व रूप शाब्द साधारण धर्म सहाय ( पक्ष ) में भी श्लेष द्वारा शाब्दसाधर्म्यारोप प्रस्तुत राजा में पुरन्दरत्वारोप का कारण हुआ। इसलिए यहाँ सोपाधि रूपक हुआ।

पृथक्कथितसादृश्यं दृश्यं सादृश्यरूपकम्।
उल्लसत्पञ्चशाखस्ते राजते भुजभूरुहः॥ २०॥

यत्र सादृश्यं पृथक् कथ्यते तत्सादृश्यरूपकं ज्ञेयमित्याह—पृथगिति। उदाहरणम्—उल्लसदिति। अत्र पञ्चशाखत्वं साधर्म्यं पृथगुच्यते न तु सोपाधिरूपक इव पदनिकट इति भावः।

अन्वयः—पृथक् कथितसादृश्यम् दृश्यं सादृश्यरूपकम् ( स्यात् ) (उदाहरणम्) उल्लसत् पञ्चशाखः ते भुजभूरुहः भाति।

व्याख्या—सादृश्यरूपकमाह—पृथक्-पृथक् पदेन कथितं सादृश्यं यस्मिन् तत् पृथक्कथितसादृश्यम्। दृश्यम्=रमणीयम् सादृश्यरूपकम् स्यात्। उदाहरति—उल्लसन्त्यः पञ्चशाखाः यस्य सः उल्लसत् पञ्चशाखः=शोभमानपञ्चसंख्यकप्रकाण्डः। तव=ते, भुज एव भूरुहः भाति=शोभते। यत्रारोप्यमाणां सर्वेषां शब्दतो ग्रहणं तत्रेदं रूपकं भवति। इदमेवाऽत्र समस्तवस्तुविषयं साङ्गं रूपकमुच्यते। तदुक्तं साहित्यदर्पणे—आरोप्याणां समस्तानां शाब्दत्वे प्रथमं मतम्। प्रथमम्=समस्त-वस्तुविषयं साङ्गम्। अत्र भुजे तरुत्वारोपे जाते तदवयवाङ्गुलीषु शाखात्वारोपः।

हिन्दी—जहाँ उपमेय और उपमान दोनों का सादृश्य पृथक् पदों से कहा गया हो वहाँ सादृश्यरूपक होता है। जैसे—पाँच अङ्गुली रूप पाँच शाखा वाला आप का भुजारूप वृक्ष शोभित हो रहा है। यहाँ पर भुजा में वृक्ष का आरोप और अङ्गुलियों में शाखा का आरोप पृथक् शब्दों से कहा गया है। इसलिए सादृश्य-रूपक हुआ॥ २०॥

स्यादङ्गयष्टिरित्येवंविधमाभासरूपकम्।
अङ्गयष्टिधनुर्वल्लीत्यादि रूपितरूपकम्॥ २१॥

किञ्चिद्रूपकं रूपकान्तरं न सहते यथा कुचकलशकोकयुगलमिति। कलशकोकयोरेकरूपस्यैव रम्यत्वात्। किञ्चित्तु सहते, यथा—अङ्गयष्टिधनुर्वल्लीमादाय कुसुमायुधः। जगज्जयति यासां ताः कथं न सरसाः स्त्रियः। इत्यादौ। प्रत्युताऽङ्गधनुर्वल्लीमित्यरम्यं लिङ्गासङ्गासङ्गतेः। एवं च यत्र रूपितरूपकं सहते तदा सरूपक [?] मित्याह—स्यादिति ॥ २१ ॥

**अन्वयः**—अङ्गयष्टिः एवंविधम् आभासरूपकं स्यात्। अङ्गयष्टिधनुर्वल्ली इत्यादि रूपितरूपकम्।

**व्याख्या**—आभासरूपकरूपितरूपके आह—अङ्गमेव यष्टिः इति अङ्गयष्टिः। इत्येवंविधम्=एतादृशप्रकारकम्। आभासरूपकम् भवति। अत्राङ्गे यष्टित्वारोपः न चमत्कारजनकः केवलं लम्बमानत्वेनाङ्गे यष्टित्वारोपात्। रूपकवदाभासते न वास्तविकं रूपकम्। रूपितरूपकं यथा—अङ्गमेव यष्टिः अङ्गयष्टिः। धनुरेव बल्ली=धनुर्वल्ली तदनु अङ्गयष्टिरेव धनुर्बल्ली इत्यादि रूपितरूपकम्। एकदा रूपितं किञ्चित् रूपकं रूपकान्तरं सहते। किञ्चिच्च नेति द्विविधं रूपकम्। पुनः रूपकम् तत्र वा अङ्गयष्टिः धनुर्वल्ली अत्राङ्गे यष्टित्वारोपरूपं रूपकात् तत्र धनुर्वल्लित्वारोपरूपं सहते। द्वितीयं यथा कुचकलशकोकयुगलम् अत्रैकरूपकस्यैव रम्यत्वात्।

**हिन्दी**—जहाँ पूर्ण सादृश्य के अभाव में भी यत् किञ्चित् सादृश्य लेकर किसी पदार्थ में किसी का आरोप हो वहाँ आभास रूपक होता है। जैसे—अङ्गयष्टि, अङ्ग में यष्टि का आरोप केवल लम्बा होने के कारण किया गया है, रोचक नहीं है। इसलिये यहाँ रूपक का आभास है न कि पूर्ण रूपक है। इसलिये इसका नाम आभासरूपक यथार्थ है। जहाँ आरोपित का आरोप किया जाय वहाँ रूपित रूपक कहा जाता है। जैसे—अङ्गयष्टि धनुर्वल्ली यहाँ अङ्ग में यष्टि का आरोप करके अङ्गयष्टि में धनुर्वल्ली का आरोप किया गया है इसलिये यहाँ रूपित रूपक हुआ ॥ २१ ॥

**परिणामोऽनयोर्यस्मिन्नभेदः पर्यवस्यति।**
**कान्तेन पृष्टा रहसि मौनमेवोत्तरं ददौ ॥ २२ ॥**

यत्र रूप्यरूपकयोर्व्यवधानेनाऽभिधानं स परिणाम इत्याह—परिणाम इति। यथा मौनोत्तरमित्यत्राऽभेदः प्रतीयते तथा न्याऽत्र, किन्तु वाक्यमहिम्ना विलम्बेनेति परिणामोऽयमित्यर्थः। प्रकृतोदाहरणे एव शब्देन व्यवधानं द्रष्टव्यम् ॥ २२ ॥

**अन्वयः**—यस्मिन् अनयोः अभेदः पर्यवस्यति ( तत्र ) परिणामः ( उदाहरणम् ) कान्तेन रहसि पृष्टा मौनमेव उत्तरं ददौ ।

**व्याख्या**—परिणामालङ्कारमाह—यस्मिन्=अलङ्कारे । अनयोः=उपमानोपमेययोः अभेदः=एकता पर्यवस्यति=आरोप्यस्य क्रियान्वये सम्भवति आरोपविषयात्मनैव क्रियायामन्वयो जायते तत्र परिणामालङ्कारो भवति । उदाहरति—कान्तेति । कान्तेन=प्रियतमेन । रहसि=एकान्ते । पृष्टा=जिज्ञासिता । मौनम्=तूष्णींभावमेव उत्तरम्=प्रतिवचनम् ददौ=दत्तवती । अत्रोत्तरे मौनत्वारोपः तच्च न स्वतःक्रियायामन्वेति—तस्योत्तररूपतयैव दानक्रियायामन्वयः । इत्यत्र परिणामालङ्कारः ।

**हिन्दी**—जहाँ उपमान और उपमेय एकत्वेन आरोपित होकर एक साथ क्रियापद में अन्वित हों वहाँ परिणामालङ्कार होता है । जैसे—नायिका ने एकान्त में प्रियतम द्वारा प्रश्न करने पर मौन ही उत्तर दिया । यहाँ मौन स्वतः दानक्रिया में अन्वित नहीं हो सकता था अतः उत्तर रूप में परिणत होकर दानक्रिया में अन्वित हुआ । रूपकालङ्कार में उपमेय को उपमान से रंग दिया जाता है ( उपमेय में उपमान का आरोप मात्र होता है ) प्रकृत में उससे कोई काम नहीं लिया जाता । यहाँ पर उत्तर में मौन का आरोप हुआ और प्रस्तुत दानक्रिया में उसका अन्वय ( उपयोग ) भी हुआ । यही रूपक और परिणामालङ्कार में भेद है ॥ २२ ॥

**बहुभिर्बहुधोल्लेखादेकस्योल्लेखिता मता ।**
**स्त्रीभिः कामः प्रियैश्चन्द्रः कालः शत्रुभिरैक्षि सः ॥ २३ ॥**

यत्रैकस्मिन्ननेककर्तृकानेकधर्मारोपस्तत्रोल्लेखिता । यथा स्त्रीभिरित्यादौ । अत्र स्त्रीप्रियशत्रुभिः कामत्वचन्द्रत्वकालत्वारोपादित्याह—बहुभिरिति ।

**अन्वयः**—बहुभिः ( कृतात् ) एकस्य बहुधा उल्लेखात् उल्लेखिता मता ( उदाहरणम् ) सः स्त्रीभिः कामः, प्रियैः चन्द्रः, शत्रुभिः काल ऐक्षि ।

**व्याख्या**—उल्लेखालङ्कारमाह—बहुभिः=अनेकैः कृतात् एकस्य=उपमेयभूतस्य बहुधा=अनेकप्रकारेण उल्लेखात्=निर्देशात् स्वस्वरुच्यनुसारेण विलोकनात्, उल्लेखिता=उल्लेखालङ्कारता मता=कथिता । उदाहरति सः=वर्णनीयो

राजा स्त्रीभिः = कामिनीभिः कामः=साक्षात् मदनः सुन्दरत्वात् । प्रियैः= बान्धवैः चन्द्रः=शशी आह्लादकत्वात् । शत्रुभिः=अरिभिः भयङ्करत्वात् कालः= मृत्युः तद्रूपः । ऐक्षि=दृष्टः । अत्रैकस्य राज्ञो बहुभिः बहुधा कामत्व-चन्द्रत्व-कालत्व-रूपानेकप्रकारतयोल्लेखात् प्रथमः उल्लेखभेदः । गुरुर्वचसि अर्जुनो यशसि भीष्मः शरासने इत्यत्र द्वितीयो भेदः ।

**हिन्दी**—जहाँ एक ही वस्तु को अनेक लोग अनेक प्रकार से समझते हैं वहीं उल्लेखालङ्कार होता है । जैसे—उस राजा को स्त्रियों ने सुन्दरता के कारण साक्षात् कामदेव माना, बन्धुजनों ने प्रिय होने के कारण चन्द्रमा समझा और शत्रुओं ने भयङ्कर होने के कारण काल समझा । यहाँ एक राजा को अपनी-अपनी रुचि के अनुसार कामिनी आदि ने काम, चन्द्र, काल रूप से माना ।

**टिप्पणी**—इस अलङ्कार के दो भेद हैं । अनेकों द्वारा एक का अनेक रूप से समझा जाना प्रथम भेद पूर्वोक्त हुआ । एक द्वारा एक को अनेक समझा जाना दूसरा भेद होता है । 'गुरुर्वचसि, अर्जुनो यशसि, भीष्मः शरासने' इस उदाहरण में एक ही व्यक्ति वर्णनीय को अनेक रूप से समझता है । वाणी में बृहस्पति, ( बृहस्पति समान वक्ता ), धवल यश में अर्जुन ( धनञ्जय ), शरासन में भीष्म=बाणसन्धान में ( भीष्म पितामह ) भयानक हैं ॥ २३ ॥

**अतथ्यमारोपयितुं तथ्यापास्तिरपह्नुतिः ।**
**नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम् ॥ २४ ॥**

यत्राऽतथ्यस्यारोपणाय तथ्यस्य निरसनं क्रियते साऽपह्नुतिः । यथा नाऽयमित्यादी । अत्र सरोरुहत्वस्यारोपाय विद्यमानस्य चन्द्रत्वस्य निषेधा-दित्याह—अतथ्यमिति ॥ २४ ॥

**अन्वयः**—अतथ्यम् आरोपयितुं तथ्यापास्तिः अपह्नुतिः भवति ( उदाहरणम् ) अयं सुधांशुः न तर्हि किं व्योमगङ्गासरोरुहम् ।

**व्याख्या**—अपह्नुत्यलङ्कारं ब्रूते—अतथ्यम् = असत्यम् आरोपयितुम् = असत्यस्यारोपणार्थम् तथ्यस्य=सत्यस्य अपास्तिः=निषेधः अपह्नुतिः=अपह्नुति-नामालङ्कारः भवति । उदाहरति--अयं पुरो दृश्यमानः, सुधांशुः=चन्द्रः, न । तर्हि किमस्ति ? व्योम्नि गङ्गा व्योमगङ्गा तस्याः=सरोरुहम् व्योमगङ्गासरोरुहम् =

आकाशगङ्गाकमलमस्ति। अत्र चन्द्रे कमलमारोपयितुम् तथ्यस्य चन्द्रस्य निषेधः। अतोऽत्र तथ्यं निषिध्य अतथ्यस्यारोपणादपह्नुत्यलङ्कारः।

हिन्दी—जहाँ असत्य वस्तु के आरोप के लिए सत्य वस्तु का निषेध किया जाय वहाँ अपह्नुति नामक अलङ्कार होता है। जैसे चन्द्रमा को देखकर कोई कहता है यह चन्द्रमा नहीं है तो क्या है, आकाशगंगा का कमल है? यहाँ कमल के आरोप के लिए चन्द्रमा का निषेध करने के कारण अपह्नुति अलंकार हुआ है॥ २४॥

पर्यस्तापह्नुतिर्यत्र धर्ममात्रं निषिध्यते।
नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्॥ २५॥

पर्यस्तापह्नुतिमाह—पर्यस्तापह्नुतिरिति। पूर्वत्र चन्द्रमसि सुधांशुत्वधर्मनिषेधे सरोरुहत्वमारोप्यते तत्र तु नाऽयं सुधांशुरिति सुधांशौ सुधांशुत्वनिषेधे प्रेयसीमुखे सुधांशुत्वारोपः। एवं च यत्र प्रकृतधर्मिणि विद्यमानो धर्मो निषिध्यते, धर्मान्तरे समारोप्यते सा पर्यस्तापह्नुतिः। यत्र तु धर्मिणि विद्यमानं धर्मं निषिध्य धर्मान्तरारोपः साऽपह्नुतिरेव। पर्यस्तापह्नुतौ धर्मनिषेधः कथमिति चेत् प्रकृतधर्मधर्मित्वनिषेध एव तात्पर्यात्तस्य च प्रकृतोदाहरणे स्फुटत्वात्। अयं तु सुधांशुर्न किन्तु प्रेयसीमुखं सुधांशुरिति प्रतीतेर्जायमानत्वादिति भावः॥ २५॥

अन्वयः—यत्र धर्ममात्रं निषिध्यते (तत्र) पर्यस्तापह्नुतिः (भवति) अयं सुधांशुः न तर्हि किम्? प्रेयसीमुखम् सुधांशुः।

व्याख्या—पर्यस्तापह्नुतिमाह—यत्र = यस्मिन्वाक्ये धर्ममात्रम् = धर्मिणि वर्तमाने सत्येव केवलं धर्मस्यैव निषेधः तथ्यवस्तुधर्मस्यातथ्यधर्मिण्यारोपाय न निषेधे सत्यर्थः। उदाहरति नायमिति—अयं = पुरो दृश्यमानः सुधांशुः = चन्द्रो न। तर्हि किम् प्रेयसीमुखम्—प्रेयस्याः = प्रियतमायाः आननम् = मुखम् सुधांशुः = चन्द्रोऽस्ति। अत्र सुधांशौ—सुधांशुत्वधर्मनिषेधः मुखे तदारोपः। एकत्र धर्मं निषिध्यान्यत्र तदारोपात् पर्यस्तापह्नुत्यलङ्कारः।

हिन्दी—धर्मी के रहने पर भी जहाँ धर्म मात्र का निषेध होता है वहाँ पर्यस्तापह्नुति होती है। उदाहरण—जैसे यह चन्द्रमा नहीं है किन्तु प्रियतमा का

ख चन्द्रमा है। यहां सुधांशु में उसके धर्म का निषेध करके प्रियतमा के मुख में उसका आरोप करने के कारण पर्यस्तापह्नुति नामक अलंकार हुआ ॥ २५ ॥

भ्रान्तापह्नुतिरन्यस्य शङ्कया तथ्यनिर्णये।
तापं तनोति सोत्कम्पं ज्वरः किं न सखि स्मरः ॥ २६ ॥

यत्र कश्चिद् भ्रान्त्याऽन्यदारोपयति परस्तु तथ्यकथनेन तं निषेधति त्र भ्रान्तापह्नुतिरित्याह—भ्रान्तेति। अन्येनाऽन्यस्मिन् शङ्क्यमाने च थ्यनिर्णय इत्यर्थः। ताप इति। कस्याश्चिच्छरीरे सोत्कम्पतापमुपलभ्य ाचिदित्थं शङ्कते स्मरादन्यतोऽपि तापो भवति तत्किं सोत्कम्पं यथा ात्तथा तव शरीरे ज्वर इति परस्त्वादिह न स्मर इति। अत्राऽतथ्यज्वर-रासेन तथ्यज्वरस्मरज्वरव्यवस्थापनात् ॥ २६ ॥

अन्वयः—अन्यस्य शङ्कया तथ्यनिर्णये भ्रान्तापह्नुतिः (भवति) (उदाहर-म्) तव शरीरः सोत्कम्पं किं ज्वरः तापं तनोति न स्मरः (अस्ति)।

व्याख्या—भ्रान्तापह्नुतिमाह—अन्यस्य = वस्त्वन्तरस्य। शङ्कया=सन्देहेन। थ्यस्य निर्णये तथ्यनिर्णये = सत्यपदार्थनिश्चये सति भ्रान्तापह्नुत्यलङ्कारो वति। उदाहरति—शीतमिति। काचित् सखी नायिकायाः सोत्कम्पं शरीरं ा कथयति तव=ते शरीरम् = वपुः सोत्कम्पम् =सवेपथु। किं ज्वरः = रनामा रोगः। सा नायिका उत्तरं ददाति—सखि न = नहि स्मरः=कामः मकृतोऽयं कम्पः न ज्वरकृतः। अत्र सख्या नायिकाशरीरे कम्पं दृष्ट्वा शङ्कितः रः नायिकोत्तरेण ज्वरभ्रान्तिनिवारिणेति भ्रान्तापह्नुतिलङ्कारः।

हिन्दी—जहाँ एक पदार्थ में दूसरे पदार्थ के सन्देह का निवारण किया य वहाँ भ्रान्तापह्नुति होती है। उदाहरण—जैसे कोई सखी नायिका के सकम्प रीर को देख कर शंका करती है कि हे सखि! तुम्हारा शरीर काँप रहा है, हें ज्वर हो गया है। नायिका कहती है—नहीं सखी! यह काम है। यहाँ सखी ज्वरभ्रान्ति होने पर नायिका द्वारा कम्प को कामकृत् बताकर उसकी भ्रान्ति निवारण किया गया है इसलिये यह भ्रान्तापह्नुति अलंकार हुआ ॥ २६ ॥

छेकापह्नुतिरन्यस्य शङ्कया तथ्यनिह्नवे।
प्रजल्पन् मत्पदे लग्नः कान्तः किं न हि नूपुरः ॥ २७ ॥

यत्र परभीत्याऽन्यारोपणेन तथ्यनिरासः सा छेकापह्नुतिरित्याह—

छेकेति । प्रजल्पन्निति । मत्पदे लग्न इति तयोक्ते कान्तः किमित्यन्ययोक्ते भीता सा नूपुरारोपेण तथ्यं कान्तमपलपतीत्यर्थः ॥ २७ ॥

अन्वयः—अन्यस्य शङ्कया तथ्यनिह्नवे छेकापह्नुतिः ( भवति ) ( उदाहरणम् ) प्रजल्पन् मत्पदे लग्नः किं कान्तः नहि नूपुरः ।

व्याख्या—छेकापह्नुतिमाह—अन्यस्य = व्यक्त्यन्तरस्य शङ्कया = भयेन तथ्यस्य सत्यस्य निह्नवे गोपने सत्यनिह्नवे = यथार्थवस्तुनः अपलापः छेकापह्नुत्यलङ्कारः स्यात् । उदाहरति—प्रजल्पन् इति । काचन नायिका स्वनर्मसखीं प्रति स्वरहस्यं ब्रूते—प्रजल्पन्=चाटूनि प्रियवचनानि ब्रुवाणः मत्पदे = मम पादयोर्लग्नः = पतितः इदं वृत्तान्तं काचिदन्या श्रुत्वा पृच्छति किं कान्तः तव पादयोर्लग्नः नायिका रहस्यविवृतिभयेन तत् निह्नुवाना ब्रूते नहि नूपुरः कान्तो न । किन्तु नूपुरः मत्पदे लग्नः । अत्र अन्यभयेन तथ्यापह्नवेन छेकापह्नुत्यलङ्कारः ।

हिन्दी—जहाँ स्पष्ट कही गयी बात दूसरा न जान जाय इस भय से अन्य बात कह कर छिपायी जाय वहाँ छेकापह्नुति नामक अलकार होता है । उदाहरण – कोई नायिका अपनी नर्मसखी से कहती है—( आज रात में ) खुशामद की बात कहता हुआ मेरे पैर पर गिर गया । ऐसा सुन कर किसी दूसरी स्त्री ने पूछा क्या तुम्हारा प्रिय ? तब नायिका ने कहा— नहीं, नूपुर बोलता हुआ मेरे पैर पर गिर गया । यहाँ पर दूसरी स्त्री रहस्य को न जान जाय इस भय से नायिका ने सत्य को नूपुर कहकर छिपाया इसलिये यहाँ छेकापह्नुति नामक अलंकार हुआ । छेक विदग्ध को कहते हैं । उनके द्वारा प्रयुक्त होने के कारण इसका नाम छेकापह्नुति हुआ ॥ २७ ॥

**कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नवे पदैः ।**
**निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात् ॥ २८ ॥**

व्याजाद्यैः पदैरपह्नुतेर्व्यज्यमानत्वे कैतवापह्नुतिरित्याह—निर्यान्तीति कैतवादित्यनेन दृक्प्रान्तनिह्नवः ॥ २८ ॥

अन्वयः—व्याजाद्यैः पदैः निह्नवे व्यक्ते कैतवापह्नुतिः ( भवति ) ( उदाहरति ) स्मरनाराचाः कान्तादृक्पातकैतवात् निर्यान्ति ।

व्याख्या—कैतवापह्नुतिं ब्रवीति—व्याजादिभिः=कपटच्छलादिभिः । पदैः शब्दैः । निह्नवे=गोपने । व्यक्ते = सूचिते । कैतवापह्नुतिनामकः अलङ्कारः

भवति । उदाहरति स्मरेति---स्मरस्य = कामस्य नाराचाः = बाणाः कान्तायाः = कामिन्याः दृशोपातः = दृक्पातः कटाक्षपातः तस्य कैतवात् छलात् = व्याजात् निर्यान्ति = निःसरन्ति । अत्रासत्यतावाचिना कैतवपदेन नैते कान्ताकटाक्षाः किन्तु कामदेवबाणा इति प्रतीयते । इत्यत्र कैतवापह्नुतिरलङ्कारः ।

हिन्दी—जहाँ कैतव, छल, व्याजादि पदों से यथार्थ वस्तु का छिपाव किया जाता है वहाँ कैतवापह्नुति होती है। जैसे कामिनी के कटाक्ष के बहाने कामदेव के बाण निकलते हैं। यहाँ कैतव पद के द्वारा ये कामिनी के कटाक्ष नहीं हैं, किन्तु कामदेव के बाण हैं ऐसा प्रतीत होता है। इसलिये यहाँ कैतवापह्नुति अलंकार हुआ ॥ २८ ॥

**उत्प्रेक्षोन्नीयते यत्र हेत्वादिर्निह्नुतिं विना ।**
**त्वन्मुखश्रीकृते नूनं पद्मैर्वैरायते शशी ॥ २९ ॥**

यत्र तथ्यनिषेधं विनाऽतथ्यारोपः सात्प्रेक्षा, निह्नुतिस्तु तथ्यनिषेधे सति इति भेदः, इत्यभिप्रायवानाह---उत्प्रेक्षेति । यत्राऽपह्नुतिनिषेधं विना हेत्वादिरुन्नीयते सोत्प्रेक्षा इत्यर्थः । त्वन्मुखेति । अत्र स्वभवासिद्धे पद्मैश्चन्द्रस्य वैरे त्वन्मुखेत्यादिना हेतुरुत्प्रेक्ष्यते । मम शोभा केवला न पर्याप्तेति पद्मशोभाग्रहणाय तेन वैरं करोतीत्याशयः ॥ २९ ॥

**अन्वयः**—यत्र निह्नुतिं विना हेत्वादि उन्नीयते ( तत्र ) उत्प्रेक्षा ( भवति ) ( उदाहरणम् ) शशी त्वन्मुखश्रीकृते पद्मैर्वैरायते ।

**व्याख्या**—उत्प्रेक्षालंकारं व्याख्याति--यत्र = यस्मिन् स्थले निह्नुतिं = अपह्नवं विना = ऋते हेत्वादिः = हेतुफलादिः उन्नीयते = सम्भाव्यते । तत्र उत्प्रेक्षानामकः अलंकारः भवति । उदाहरति---त्वन्मुखेति—तव मुखं त्वन्मुखं तस्य श्रीः त्वन्मुखश्री तस्याः कृते त्वन्मुखश्रीकृते = तव मुखशोभालाभाय शशी = चन्द्रः नूनं = हि पद्मैः = कमलैः । वैरायते = वैरं करोति । अत्र चन्द्रपद्मयोर्वैरः न मुखश्रीलिप्साहेतुकः तथापि तद्धेतुत्वेन सम्भावितः इति हेतूत्प्रेक्षा अत्र वर्तते । अत्र नूनमित्युत्प्रेक्षा वाचकं पदम् । इयमुत्प्रेक्षा द्विविधा—गूढा अगूढा च । इवादिपदाभावे गूढा तत्प्रयोगे अगूढा । पुनः हेतुफलस्वरूपैः द्विविधाऽपि इयं षड्विधा । तत्रेदं अगूढोत्प्रेक्षोदाहरणम् । उत्प्रेक्षावाचकस्य नूनमिति पदस्य सत्वात् ।

हिन्दी—जहाँ पर निषेध के बिना ही किसी वस्तु में हेतु फलादि की सम्भा-

वना की जाय वहाँ उत्प्रेक्षा अलंकार होता है। जैसे—तुम्हारे मुख की शोभा पाने के लिये चन्द्रमा कमलों से वैर करता है। यहाँ स्वाभाविक चन्द्र और कमल के वैर को मुखश्री-लिप्साहेतुक बताया गया है। इसलिये हेतूत्प्रेक्षा हुई। यह उत्प्रेक्षा मूल में दो तरह की होती हैं—गूढा और अगूढा। उत्प्रेक्षावाचक इवादि पद के रहने पर अगूढा और उसके न रहने पर गूढा होती है। ये दोनों ही हेतु-फल-स्वरूप भेदों से तीन प्रकार की होती हुई ६ प्रकार की हो जाती हैं। यह उदाहरण अगूढा हेतूत्प्रेक्षा का है। क्योंकि यहाँ उत्प्रेक्षावाचक नूनं पद है। उत्प्रेक्षा के वाचक शब्द अन्यत्र कहे गये हैं। जैसे—

मन्ये, शङ्के, ध्रुवं प्रायो नूनमित्येवमादिभिः।
उत्प्रेक्षा व्यज्यते शब्दैरिव शब्दोऽपि तादृशः॥ २९॥

**इवादिकपदाभावे गूढोत्प्रेक्षां प्रचक्षते।**
**यत्कीर्तिर्विभ्रमश्रान्ता विवेश स्वर्गनिम्नगाम्॥ ३०॥**

इयमुत्प्रेक्षाक्षरमिति पदस्योत्प्रेक्षाव्यञ्जकरहिता तु गूढेत्याह—इवादीति। अत्राऽशेषभुवनपर्यटनरूपविलासश्रान्तायाः कीर्तेर्गङ्गावगाहनमुत्प्रेक्ष्यते। न च मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः शब्दाः व्यञ्जकाः सन्तीति भावः॥ ३०॥

**अन्वयः**—इवादिकपदाभावे गूढोत्प्रेक्षां प्रचक्षते (बुधाः)। उदाहरति विभ्रमश्रान्ता त्वत्कीर्तिः स्वर्गनिम्नगां विवेश।

**व्याख्या**—गूढोत्प्रेक्षालक्षणं ब्रूते—इवादिकेति। इवदिकपदाभावे=इवादिकोत्प्रेक्षावाचकपदाभावे अनुपादाने। गूढोत्प्रेक्षां=प्रतीपमानोत्प्रेक्षां प्रचक्षते=ब्रूते भवति। उदाहरति—त्वत्कीर्तिरिति। विभ्रमश्रान्ता = सर्वलोकपरिभ्रमणपरिश्रान्ता तव कीर्तिः त्वत्कीर्तिः=तव यशः स्वर्गनिम्नगाम् स्वर्गस्य निम्नगां=स्वर्गगङ्गाम्-विवेश=प्रविष्टाभूत्। अत्रोत्प्रेक्षावाचकं किमपि पदं नास्तीति गूढोत्प्रेक्षा। अत्र कीर्तेः स्वर्गनिम्नगावगाहने सकललोकभ्रमणजन्यश्रमः हेतुत्वेनोत्प्रेक्षितः। उत्प्रेक्षावाचकं पदमिवादि न वर्तते इति गूढा हेतूत्प्रेक्षेयम्। अत्र कीर्तौ प्रवेशकर्तृकतादात्म्यारोपात्स्वरूपोत्प्रेक्षा–गंगावगाहनस्याफलस्यापि फलत्वेनोत्प्रेक्षणात् फलोत्प्रेक्षा अपि।

**हिन्दी**—जहाँ इवादि उत्प्रेक्षावाचक पद का अभाव हो वहाँ गूढोत्प्रेक्षा होती है। उदाहरण—हे राजन्! आपकी कीर्ति सारे लोक में भ्रमण करने से थक कर

स्वर्गगंगा में प्रविष्ट हो गई। जैसे थका हुआ व्यक्ति थकावट को दूर करने के लिए नदी में स्नान करता है उसी तरह लोकभ्रमण से होने वाली थकावट को दूर करने के लिए मानो स्वर्ग गंगा में प्रविष्ट हुई। यहाँ पर स्वर्ग गंगा में प्रवेश का कारण भमण से होनेवाली थकावट है इसलिये यहाँ हेतूत्प्रेक्षा हुई। वाचक पद के न होने के कारण गूढा हेतूत्प्रेक्षा हुई। कीर्ति में असत् प्रवेशकर्तृत्व का स्वरूपतः वर्णन किया है इसलिये स्वरूपोत्प्रेक्षा हुई। अफलगंगावगाहन का फलत्वेन वर्णन करने से फलोत्प्रेक्षा भी हुई ॥ ३० ॥

स्यात्स्मृतिभ्रान्तिसंदेहैस्तदेवालंकृतित्रयम् ।
पङ्कजं पश्यतस्तस्या मुखं मे गाहते मनः ॥ ३१ ॥
अयं प्रमत्तमधुपस्त्वन्मुखं वेद पङ्कजम् ।
पङ्कजं वा सुधांशुर्वेत्यस्माकं तु न निर्णयः ॥ ३२ ॥

स्मृतिभ्रान्तिसन्देहेषु यत्र यद्वर्ण्यते तत्र स एवालङ्कार इत्याह---**स्यादिति पङ्कजमिति**। सदृशदर्शने सदृशाऽन्तरस्मरणादित्यर्थः। अयमित्यत्र पूर्वार्धे मधुपभ्रम उत्तरार्द्धे स्वस्य सन्देहो वर्ण्यत इत्यर्थः ॥ ३१-३२ ॥

**अन्वयः**-- स्मृतिभ्रान्तिसन्देहैः तदेव अलङ्कृतित्रय स्यात्। ( क्रमशः उदाहरणम् )---पङ्कजं पश्यतः मे मनः तस्या मुखं गाहते, अयं प्रमत्तमधुपः त्वन्मुखं पङ्कजं वेद, अस्माकं तु पङ्कजो वा सुधांशुः वा इति निर्णयो नास्ति।

**व्याख्या**---स्मृति-भ्रान्ति-सन्देहालङ्कारानाह---स्मृतिश्च, भ्रान्तिश्च, सन्देहश्च ते तथोक्ताः तैः स्मृतिभ्रान्तिसन्देहैः हेतुभूतैः तदेव=स्मृतिभ्रान्तिसन्देहादिकमेव अलङ्कृतित्रयं भवति। उदाहरति क्रमेण---पङ्कजं=कमलं पश्यतो मे=मम मनः=चेतः प्रियायाः प्रियतमायाः मुखम्=वदनम् गाहते=प्रविशति स्मरतीत्यर्थः। अत्र सदृशकमलदर्शनेन प्रियामुखस्मरणात् स्मरणालङ्कारः।

भ्रान्तिमदलङ्कारो यथा---अयं=दृश्यमानः प्रमत्तश्चासौ मधुपश्चेति प्रमत्तमधुपः=उन्मत्तमधुकरः। तव मुखम् त्वन्मुखम्=तव वदनम् पङ्कजं=कमलं वेद=जानाति। अत्र कमलसदृशमुखदर्शनेन भ्रमरस्य मखे कमलत्वभ्रान्त्या भ्रान्तिमदलङ्कारः।

सन्देहालङ्कारो यथा---( कान्तामुखं दृष्ट्वा तत्प्रियो वदति ) इदम् पङ्कजम्=कमलम् सुधांशुः=चन्द्रो वा इति अस्माकं निर्णयो नास्ति।

हिन्दी—जहाँ किसी सदृश वस्तु को देखने पर पूर्वानुभूत तत्समान वस्तु का स्मरण तथा भ्रान्ति एवं संशय हो जाय वहाँ इन तीन नाम वाले स्मृति, भ्रान्ति, सन्देह नामक तीन अलंकार होते हैं। उदाहरण क्रम से—कमल को देखकर मेरा मन प्रिया के मुख को याद करता है यहाँ स्मरणालंकार हुआ। यह भ्रमर तुम्हारे मुख को कमल जानता है यहाँ भ्रान्तिमान् अलंकार हुआ। तुम्हारे मुख को देख कर मेरा निश्चय नहीं हो रहा है कि यह कमल है अथवा चन्द्रमा है यह सन्देहालंकार है ॥ ३१-३२ ॥

मीलितं बहुसादृश्याद्भेदवच्चेन्न लक्ष्यते ।
रसो नालक्षि लाक्षायाश्चरणे सहजारुणे ॥ ३३ ॥

यत्र सदृशवस्तुन आधिक्येनाभिभूतं सदृशान्तरं स्वरूपत एव नोपलभ्यते तन्मीलितम् ॥ ३३ ॥

अन्वयः— बहुसादृश्यात् भेदवत् चेत् (उपमानम्) न लक्ष्यते (तदा) मीलितम् नामकोऽलङ्कारो भवति। (उदाहरति) सहजारुणे चरणे लाक्षायाः रसः न अलक्षि।

व्याख्या—मीलितालङ्कारमाह—बहु च तत् सादृश्यम् बहुसादृश्यम् तस्मात् बहुसादृश्यात्=अतिशयसादृश्यात्। भेद अस्यास्तीति भेदवत्=भिन्नवत् चेत्=यदि उपमानं न लक्ष्यते=न दृश्यते तदा मीलितं नाम अलङ्कारो भवति। उदाहरति—कान्तायाः सहजारुणे=स्वभावतो रक्ते चरणे=पादे लाक्षायाः=अलक्तस्य रसः=रागः न अलक्षि=न अदृश्यत। अत्र स्वाभाविकारुणिम्न उपमानं लाक्षारसः स च सादृश्याशितयात् भिन्नरूपेण न लक्ष्यते इति मीलितं नामायमलङ्कारः।

हिन्दी—जहाँ अत्यन्त सदृश होने के कारण उपमान पृथक् न दिखाई दे वहाँ मीलित अलंकार होता है। जैसे—स्वभावतः कान्ता के लाल चरण में अलक्तक का रस अलग नहीं दिखायी दिया। यहाँ कान्ता के चरण की रक्तता के अत्यन्त सदृश होने के कारण अलक्तक उसमें छिप जाने के कारण अलग नहीं दिखाई देता है इसलिये मीलित अलंकार हुआ ॥ ३३ ॥

सामान्यं यदि सादृश्याद्भेद एव न लक्ष्यते ।
पद्माकरप्रविष्टानां मुखं नालक्षि सुभ्रुवाम् ॥ ३४ ॥

यत्र समसदृशतया स्वरूपोपलम्भेऽपि न वैधर्म्योपलम्भः तत्सामान्यम्

मित्याह—मीलितमिति। एकत्र नालक्षि स्वरूपतः। अन्यत्र नालक्षि विशेषतः ॥ ३४ ॥

अन्वयः—सादृश्यात् यदि भेद एव न लक्ष्यते (तर्हि) साम्यम् (भवति) (उदाहरणम्) पद्माकरप्रविष्टानां सुभ्रूणां मुखं न अलक्षि।

व्याख्या—सामान्यालङ्कारमाह—सादृश्यात्=साम्यात् यदि=चेत् भेद एव=भिन्नता एव न=नहि लक्ष्यते=दृश्यते तर्हि सामान्यालङ्कारः भवति। उदाहरति—पद्माकरेति। पद्मानां आकरः पद्माकरस्तत्र प्रविष्टानां=पद्मवनगतानाम् सुभ्रुवाम्=कामिनीनाम् भेद एव=भिन्नतैव न अलक्षि=न अदर्शि। अत्र कमलकामिनीमुखसादृश्यात् द्वयोर्भेदो न प्रतीयते। मीलितालङ्कारमुपमानस्वरूपस्याधानम्। अत्र तु भेदज्ञानेऽपि व्यावर्तकधर्मो नोपलभ्यते इत्यनयोर्भेदः।

हिन्दी—जहाँ सदृश होने के कारण भेद का ज्ञान न हो वहाँ सामान्यालंकार होता है। जैसे—कमलवन में प्रविष्ट कामिनियों का मुख नहीं पहचाना जा सका। यहाँ कमल और कामिनी के मुख में समानता के कारण भेद का ज्ञान न होने से सामान्यालंकार हुआ। मीलित अलंकार में अत्यन्त समानता के कारण उपमान छिप जाता है, अलग नहीं दिखाई देता, पर सामान्यालंकार में अलग दिखाई देता है किन्तु भिन्नता की प्रतीति नहीं होती है यही दोनों में भेद है।३४।

हेतोः कुतोऽपि वैशिष्ट्यात्स्फूर्तिरुन्मीलितं मतम्।
लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च ॥ ३५ ॥

केनचिद्धेतुना विशेषे ज्ञाते या भिन्नतया स्फूर्तिः सोन्मीलितमित्याह—हेतोरिति लक्षितानीति। अत्र चन्द्रेण कुञ्चिते पद्मे मुखानां भेदधीरित्यर्थः ॥ ३५ ॥

अन्वयः—कुतः अपि हेतोः वैशिष्ट्यात् स्फूर्तिः उन्मीलितम् मतम् (उदाहरति) चन्द्रे उदिते पद्मानि च मुखानि च लक्षितानि।

व्याख्या—उन्मीलितं व्याख्याति—कुतोऽपि=कस्मादपि। हेतोः=कारणात् वैशिष्ट्यात्=व्यवच्छेदकधर्मत्वात्। स्फूर्तिः=उपमानोपमेययोर्भेदज्ञानम्। उन्मीलितं=उन्मीलितनामा अलङ्कारः मतम्=इष्टम्। उदाहरणम्—लक्षितानीति। चन्द्रे=शशिनि; उदिते=उदगते उदयं प्राप्ते सति पद्मानि=कमलानि च मुखानि=

वदनानि च लक्षितानि=भिन्नतया ज्ञातानि । अत्र चन्द्रोदयहेतोः मुखकमल भेदप्रत्ययात् उन्मीलितालङ्कारो भवति ।

हिन्दी—जहाँ अति समान उपमान उपमेय में किसी कारण से भेद का ज्ञ हो जाय वहाँ उन्मीलित नामक अलंकार होता है । जैसे—चन्द्रोदय के हो ज पर कमल और मुख भिन्न रूप से जाने गये । क्योंकि चंद्रोदय के कारण क संकुचित हो गया और मुख पूर्ववत् विकसित ही रहा । इसलिए यहाँ उन्मीलि नामक अलंकार हुआ । अलंकार का नाम सार्थक है । समानता में निमील का संकोच रूप भेदज्ञान से उन्मीलन हुआ । इसलिए यहाँ उन्मीलित नाम अलंकार हुआ ।। ३५ ।।

अनुमानं च कार्यादेः कारणाद्यवधारणम् ।
अस्ति किञ्चिद्यदनया मां विलोक्य स्मितं मनाक् ।। ३६ ।।

अनुमानमिति । अत्र स्मितेन कार्येण तस्या अन्तःस्थितोऽभिलाषो नुमीयते इत्यर्थः ।। ३६ ।।

अन्वयः—कार्यादेः कारणाद्यवधारणम् च अनुमानम् ( भवति उदाहरति ) अनया मां विलोक्य मनाक् स्मितं तत् किञ्चित् अस्ति ।

व्याख्या—अनुमानालङ्कारमाह—कार्यादेः=निमित्तात् कारणाद्यवधारणम् कारणादिनिश्चयः । यत्र=यस्मिन् स्थले भवति । कार्येण कारणप्रतीतिः स्य तत्र=तस्मिन् स्थले अनुमानम् = अनुमानालङ्कारः भवति । यत् = यस्म कारणात् । अनया=नायिकया । मां विलोक्य=दृष्ट्वा । मनाक्=ईषत् । स्मित हसितम् । तत्=तस्माद्धेतोः किमपि अस्ति=मद्विषये कश्चन भावो वि इति ज्ञायते । अत्र स्मितरूपकार्येण मानसोः भावः कारणमनुमीयते इत्यनुमा लङ्कारो भवति ।

हिन्दी—जहाँ कार्य से कारण का ज्ञान किया जाता है वहाँ पर अनुमा लंकार होता है । जैसे—इस नायिका ने मुझे देखकर कुछ हँसा इसलिए इ मन में मेरे प्रति कोई भाव अवश्य है । यहां पर स्मितरूप कार्य से हृदयस्थि भाव का अनुमान होता है इसलिये यहाँ अनुमानालंकार हुआ ।। ३६ ।।

अर्थापत्तिः स्वयं सिध्येत्पदार्थान्तरवर्णनम् ।
स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम् ।। ३७ ।।

यत्रैकसिद्ध्याऽर्थान्तरमर्थात् सिध्यति—साऽर्थापत्तिः। यथोत्कृष्टचन्द्र-जयवर्णनेऽपकृष्टपद्मजयो मुखस्येत्याह—अर्थेति। अत्र क्षीरोदजन्मा येन जितः तस्य सरोजन्मजये कियान् श्रमः इति क्षीरोदजन्मत्वं व्यङ्ग्यं अस्फुटम् ॥ ३७ ॥

अन्वयः—( यत्र ) पदार्थान्तरवर्णनम् स्वयं सिद्ध्येत् तत्र अर्थापत्तिः ( भवति उदाहरति ) सः इन्दुः त्वन्मुखेन जितः सरसीरुहाम् का वार्ता।

व्याख्या—अर्थापत्तिमाह—अन्यः पदार्थः पदार्थान्तरम् तस्य वर्णनम् पदार्थान्तरवर्णनम्=कस्यचित् वस्त्वन्तरस्य वर्णनम् यत्र स्वयं=अप्रयासेन सिद्ध्येत्=सिद्धं भवेत् तत्रार्थस्य पदार्थान्तरस्य आपत्तिरर्थापत्तिरलंकारः। यत्रैकपदार्थस्य सिद्ध्यापरपदार्थस्य सिद्धिरर्थाद् भवति तत्रायमलङ्कारः। यथा मूषकेन दण्डो भक्षितः इति कथनेन तत्संलग्नोऽपूपोऽवश्यं भक्षित इत्यर्थादायाति एवंरूपदण्डापूपिकन्यायात् यत्रार्थान्तरसिद्धिः तत्रार्थापत्तिर्भवति। तदुक्तम् 'दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते।' उदाहरणम्—स इति। स=इन्दुः=चन्द्रः, त्वन्मुखेन=तव वदनेन। जितः=पराजितः सरसीरुहाम्=कमलानां जये तु का कथा=का वार्ता। कमलोत्कृष्टचन्द्रजये कृते तत्कर्तृकः कमलजयः स्वयं सिद्धः। अतोऽत्रार्थापत्तिरलङ्कारः।

हिन्दी—जहाँ पर किसी एक पदार्थ के वर्णन से दूसरे पदार्थ की सिद्धि हो जाय वहाँ अर्थापत्ति अलंकार होता है। ( चूहे ने दण्ड खाया यह कहने से उसमें लगा हुआ मालपूआ भी अवश्य खाया होगा इस दण्डापूपिक न्याय से एक के कथन से दूसरे की सिद्धि होती है। ) उदाहरण—जैसे हे प्रिये! जब तुम्हारे मुख ने चन्द्रमा को जीत लिया तो कमल के जय की क्या बात। यहाँ पर अधिक गुण वाले चन्द्र के जयवर्णन से कमल का जय अर्थात् सिद्ध हो जाता है। इसलिये यहाँ अर्थापत्ति अलंकार हुआ ॥ ३७ ॥

स्यात्काव्यलिङ्गं वागर्थो नूतनार्थसमर्थकः।
जितोऽसि मन्द कन्दर्प मच्चित्तेऽस्ति त्रिलोचनः ॥ ३८ ॥

यत्र नूतनस्यार्थस्य समर्थको वाक्यार्थः पदार्थो वा तत् काव्यलिङ्गम्। यथा स्मरजयसमर्थः कः स्मरहरस्य हृदि सद्भाव इत्याह-स्यादिति। मन्नाऽसक्ते हृदि क्व तत्प्रसर इति भावः ॥ ३८ ॥

 

**अन्वयः**—यत्र नूतनार्थसमर्थकः वागर्थः तत्र काव्यलिङ्गं स्यात् । हे मन्दकदर्प जितोऽसि ( यतः ) मच्चित्ते त्रिलोचनः अस्ति ।

**व्याख्या**—काव्यलिङ्गालङ्कारमाह—यत्र=यस्मिन् स्थले । नूतनस्य अर्थस्य समर्थकः नूतनार्थसमर्थकः=नवीनार्थबोधकः । वागर्थः=पदस्य वाक्यस्य वा अर्थः स्यात् तत्र काव्यलिङ्गमलङ्कारः स्यात् । समर्थनयोग्यस्य यत्र पदार्थद्वारा वाक्यार्थद्वारा वा समर्थनं तत्र काव्यलिङ्गम् भवति । एवं पदार्थहेतुको वाक्यार्थहेतुको वेति भेदेनास्यालङ्कारस्य द्वौ भेदौ । उदाहरति—जित इति । मन्दश्चासौ कन्दर्पः मन्दकन्दर्पः तत् सम्बुद्धौ हे मन्दकन्दर्प ! = मूर्ख कामदेव ! त्वं जितोऽसि = मया पराजितोऽसि यतः मच्चित्ते=मम चेतसि, त्रीणि लोचनानि यस्य सः त्रिलोचनः = त्रिलोचनो भगवान् शंकरः अस्ति । अत्र मम चित्ते त्रिलोचनोऽस्तीति वाक्यार्थेन कामदाहकशंकरतृतीयलोचनरूपनवीनार्थोपस्थित्या मत्कर्तृकस्तव जयः समर्थितो भवति । अतः काव्यलिङ्गमलंकारः । स च वाक्यार्थहेतुकः ।

**हिन्दी**—जहाँ नया अर्थ बोध करानेवाले पद अथवा वाक्य हों वहाँ काव्यलिङ्ग अलंकार होता है। हे मूर्ख कामदेव ! तुम मेरे द्वारा पराजित हो गये, क्योंकि मेरे चित्त में त्रिलोचन भगवान् शंकर है । यहाँ 'मच्चित्तेऽस्ति त्रिलोचनः' इस वाक्य के अर्थ से समर्थनसापेक्ष मत्कर्तृक कामविजय का समर्थन होता है। क्योंकि जहाँ भगवान् शंकर का कामदाहक नयन होगा वहाँ काम का जय अवश्य हो जायगा । यह काव्यलिङ्ग दो तरह का होता है । एक पदार्थहेतुक और दूसरा वाक्यार्थहेतुक । यहाँ पर वाक्यार्थहेतुक है ॥ ३८ ॥

**अलङ्कारः परिकरः साभिप्राये विशेषणे ।**
**सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः ॥ ३९ ॥**

**अलङ्कार इति ।** अत्र सुधेत्यादि विशेषणं साभिप्रायं शीतलान्वितेन तापोपशान्तेः सम्भवादिति भावः ॥ ३९ ॥

**अन्वयः**—विशेषणे साभिप्राये परिकरः अलंकारः ( भवति ) उदाहरति—सुधांशुकलितोत्तंसः शिवः वः तापं हरतु ।

**व्याख्या**—परिकरालंकारमाह—विशेषणे=भेदके, अभिप्रायेण सहिते साभिप्राये=प्रकृतार्थानुकूलतात्पर्यसहिते सति परिकरालंकारः भवति । उदाहरणं यथा—सुधांशुना = सुधाकरेण कलितः = कृतः उत्तंसः = शिरोभूषणं येन सः सुधांशुकलितो

त्तंसः । शिवः=शंकरः वः = युष्माकम् । तापम् =संतापम् । हरतु =दूरीकरोतु । अत्र सुधांशुकलितोत्तंसः इति विशेषणेन सुधांशोः शीतरश्मित्वेन तापशमनकारकत्वस्यौचित्यं लक्षितं भवति । इति विशेषणस्यं साभिप्रायत्वात् अत्र परिकरालंकारः ।

हिन्दी—जहाँ विशेषण किसी विशेष अभिप्राय से दिया जाय वहाँ परिकरालंकार होता है। उदाहरण-जिन्होंने सुधांशु को शिरोभूषण बनाया है वह शिव आप लोगों के सन्ताप को हरें। यहाँ 'सुधांशुकलितोत्तंसः' इस विशेषण से सन्ताप हरण करने वाली शक्ति वाले शिवजी यह अभिप्राय होता है क्योंकि चन्द्रमा की शीतलता से तापशान्ति स्वाभाविक है। इसलिये विशेषण के साभिप्राय होने से यहाँ परिकरालंकार हुआ ॥ ३९ ॥

**साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः ।**
**चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥ ४० ॥**

**साभिप्राय इति। अत्र चतुर्भुज इति विशेष्यं साभिप्रायं दानसाधनानां भुजानां देयसमसङ्ख्यत्वे युगपद्दानसम्भवादिति भावः ॥ ४० ॥**

अन्वयः—विशेष्ये तु साभिप्राये परिकराङ्कुरो भवेत् । उदाहरणं यथा—चतुर्भुजः देवः चतुर्णां पुरुषार्थानां दाता अस्ति ।

व्याख्या—परिकराङ्कुरालंकारं व्याचष्टे—विशेष्ये=वर्णनीये साभिप्राये=प्रकृतार्थानुकूलतात्पर्यसहिते सति परिकराङ्कुरः भवेत्=स्यात् । उदाहरति—चतुर्णामिति। चत्वारः भुजा यस्य सः चतुर्भुजः=भुजचतुष्टययुक्तः देवः=श्रीविष्णुः । चतुर्णाम्=चतुः संख्याकानां पुरुषार्थाना=धर्मार्थकामसमोक्षाख्यानाम् । दाता=दायकः अस्ति । अत्र चतुर्भिः भुजैरेकदैव धर्मार्थकाममोक्षाणां पुरुषार्थानां दानस्य सौकर्यस्वारस्यात् विशेष्यस्य चतुर्भुजस्य साभिप्रायता । अतोऽत्र परिकरालंकारः ।

हिन्दी—जहाँ विशेष्यवाचक पद का किसी अभिप्राय से प्रयोग हो वहाँ परिकराङ्कुरालंकार होता है। उदाहरण जैसे—चतुर्भुज भगवान् विष्णु चारों पुरुषार्थों के देने वाले हैं। यहाँ भगवान् विष्णु का चतुर्भुज के रूप में वर्णन इसलिये किया गया है कि वे एक ही काल में धर्म, अर्थ, काम और मोक्ष इन चारों पदार्थों को दे सकते हैं। इसलिये यहाँ परिकराङ्कुरालंकार हुआ ॥ ४० ॥

**अक्रमातिशयोक्तिश्चेद् युगपत्कार्यकारणे ।**
**आलिङ्गन्ति समं देव ज्यां शराश्च पराश्च ते ॥ ४१ ॥**

अतिशयोक्तिश्चतुर्द्धा। तत्र कार्यकारणयोर्यौगपद्येऽक्रमातिशयोक्तिः यथा—आलिङ्गन्तीत्यत्र मौर्वीशरसम्बन्धः शत्रूणां भूसम्बन्धे कारणं, तयो श्चाऽत्र यौगपद्यं ज्याशब्देन मौर्व्या उर्व्याश्च ग्रहणादित्याह—अक्रमेति ।४१

अन्वयः—चेत् कार्यकारणे युगपत् स्तः (तदा) अक्रमातिशयोक्तिः ( भवति ) ( उदाहरति ) देव ! तव शराः च पराः च ज्याम् युगपत् आलिङ्गन्ति ।

व्याख्या—अक्रमातिशयोक्तिमाह—चेत् = यदि । कार्यकारणे = हेतुफले युगपत् = एककालम् । स्तः = वर्तेते । एककालभवत्वेन वर्ण्येते । तदा अक्रमाति शयोक्तिः = एतन्नामा अलङ्कारः भवति । उदाहरति—आलिङ्गन्तीति । हे देव ते = तव शराः = बाणाः च पराः = शत्रवः च ज्याम् = प्रत्यञ्चां पृथ्वीं च समम् = सहैव आलिङ्गन्ति = समाश्रयन्ति । यत्र साध्यवसाना गौणीलक्षणा उपमानेनोपमेयस्य प्रस्तुतस्य निगरणमभेदाध्यवसायस्तत्रातिशयोक्तिनामालङ्कारः । यदुक्तमन्यत्र- 'सिद्ध्यत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते ।' अध्यवसायो नाम = विषयनिगरणे तादात्मतया विषयिणोऽभेदप्रतीतिः । अस्या बहवो भेदास्तेषु कार्यकारणयोर्युगपद् वर्णनात्मको प्रथमः भेदः । अतिशया=अतिक्रान्तलोकव्यवहारा उक्तिः अतिशयोक्तिः

हिन्दी—जहाँ कार्य और कारण एक ही समय में हो, वहाँ अक्रमातिशयोक्ति नामक अलंकार होता है । जैसे—हे राजन् ! आपके बाण और शत्रु एक ही काल में ज्या ( प्रत्यञ्चा और पृथ्वी ) को प्राप्त करते हैं । पहले कारण पश्चात् कार्य का होना लोकप्रसिद्ध है । यहाँ दोनों का एक काल में वर्णन किया गया है । इसलिए यहाँ अक्रमातिशयोक्ति है । कार्य की अतिशीघ्रता के वर्णन में कवि इसका प्रयोग करते हैं ।। ४१ ।।

**अत्यन्तातिशयोक्तिस्तत्पौर्वापर्यव्यतिक्रमे ।**
**अग्रे मानो गतः पश्चादनुनीता प्रियेण सा ।। ४२ ।।**

यत्र कार्यमेव पूर्वमुच्यते साऽत्यन्तातिशयोक्तिः । यथाऽग्रे—इत्यादौ अत्राऽनुनयस्य कारणस्य पूर्वं मानभङ्गकार्यवर्णनादित्याह—अत्यन्तेति ।

अन्वयः—( कारणकार्ययोः ) तत् पौर्वापर्यव्यतिक्रमे अत्यन्तातिशयोक्तिः ( स्यात् ) ( उदाहरति ) मानः अग्रेगतः सा पश्चात् प्रियेण अनुनीता ।

व्याख्या—अत्यन्तातिशयोक्तिं लक्षयति—पूर्वञ्च अपरं च पूर्वापरे तयोर्भावः पौर्वापर्यं तयोः = कार्यकारणयोः पौर्वापर्यम् = पूर्वपरोभावः । तस्य व्यतिक्रमम् =

उल्लङ्घनं तस्मिन् पौर्वापर्यक्रमव्यतिक्रमे सति अत्यन्तातिशयोक्तिः = एतन्नामा अलङ्कारो भवति । उदाहरति-अग्र इति । मानिन्याः=मानवत्या स्त्रियः मानः= कोपः अग्रे=प्रथममेव गतः=नष्टः सा=नायिका प्रियेण=प्रियतमेन पत्या पश्चात्= मानगमनानन्तरम् । अनुनीता = प्रसादिता । अनुनयः माननिराकरणस्य कारणं माननिराकरणं च कार्यं तत्तु कारणात् पूर्वं कार्यस्यैव वर्णनात् अत्यन्तातिशयोक्ति-नामालङ्कारः ।

हिन्दी—कारण और कार्य के पौर्वापर्य (पूर्व और पर=अनन्तर) भाव अर्थात् पहले और बाद वाले भाव में व्यतिक्रम (उलटा) होने पर अर्थात् कार्य के पहले होने और कारण के बाद में होने पर अत्यन्तातिशयोक्ति होती है । इसका उदाहरण है—पहले कामिनी का मान चला गया फिर प्रियतम ने अनुनय किया । यहाँ अनुनय रूपी कारण पहले होना चाहिए, फिर मान का जाना होना चाहिए पर यहाँ इनके क्रम उलट जाने से यह अलंकार हुआ ॥ ४२ ॥

**चपलातिशयोक्तिस्तु कार्ये हेतुप्रसक्तिजे ।**
**यामीति प्रियपृष्टाया वलयोऽभवदूर्मिका ॥ ४३ ॥**

अन्वयः—कार्ये हेतुप्रसक्तिजे (सति) चपलातिशयोक्तिर्भवति । (उदाहरति यामि इति प्रियपृष्टायाः ऊर्मिकावलयः अभूत् ।

**व्याख्या**—चपलातिशयोक्तिमाह—कार्ये हेतोः=कारणस्य प्रसक्तिः=प्रसङ्गः तज्जे=तज्जन्ये हेतुप्रसक्तिजे सति=चपलातिशयोक्तिः = एतन्नामा अलङ्कारः भवति । कारणकथनमात्रेण कार्योत्पत्तिः चपलातिशयोक्तिः । उदाहरति—यामीति । अहं यामि=गच्छामि प्रवासं इति प्रियेण पृष्टायाः = कामिन्याः ऊर्मिका= अङ्गुलीयकम् । वलयः = करभूषणमभूत् = जातम् । प्रियप्रवासवर्णनमात्रेण कार्श्योदयात् अङ्गुलीयकं वलयमभूत् । इत्यत्र कारणप्रसङ्गमात्रेण कार्यस्य वर्णनात् चपलातिशयोक्तिनामा अलङ्कारः । इदमतिशयोक्तेर्भेदत्रयम् । कार्यस्य शीघ्रता-प्रत्यायनार्थं भवति ।

हिन्दी—जहाँ कारण के श्रवणमात्र से कार्य हो जाय वहाँ चपलातिशयोक्ति नामक अलङ्कार होता है । जैसे—मैं परदेश जा रहा हूँ ऐसा प्रियतम के पूछते ही कामिनी की अंगूठी दुर्बलता के कारण कङ्गन हो गई । यहाँ प्रवासरूप कारण के श्रवणमात्र से दुर्बलतारूप कार्य का वर्णन किया गया है इसलिए चपलातिशयोक्ति नामक अलङ्कार हुआ ॥ ४३ ॥

सम्बन्धातिशयोक्तिः स्यात् तदभावेऽपि तद्वचः ।
पश्य सौधाग्रसंसक्तं विभाति विधुमण्डलम् ॥ ४४ ॥

**अन्वयः**—तदभावे अपि तद्वचः सम्बन्धातिशयोक्तिः स्यात् ( उदाहरति पश्य विधुमण्डलम् सौधाग्रसक्तं विभाति ।

**व्याख्या**—सम्बन्धातिशयोक्ति व्याख्याति—तस्य = सम्बन्धस्य अभावे = वि अपि तस्य = सम्बन्धस्य वचः = कथनम् सम्बन्धातिशयोक्तिः = एतन्नामा अलङ्का भवति । उदाहरति—पश्येति । पश्य = अवलोकय विधुमण्डलम् = चन्द्रमण्ड सौधाग्र = प्रासादाग्रे लग्नम् = संसक्तम् विभाति = शोभते । नायिकां प्रति ना स्योक्तिः । अत्र सौधस्य गगनचुम्बित्ववर्णनं कविना चन्द्रबिम्बस्य गृहशिखरसम्ब भावेऽपि तत्सम्बन्धस्य कथनात् सम्बन्धातिशयोक्तिनामा अलङ्कारः ।

**हिन्दी**—जहाँ सम्बन्ध के न रहने पर भी सम्बन्ध का वर्णन किया जाय सम्बन्धातिशयोक्ति नामक अलंकार होता है । जैसे—हे प्रिये ! देखो राजमह शिखर पर चन्द्रमा सटा हुआ है । यहाँ चन्द्रमा के अत्यन्त ऊँचे रहने पर सम्बन्ध न होने पर भी, सम्बन्ध का वर्णन किया गया है । इसलिए यहाँ सम्बन्धा तिशयोक्ति है ॥ ४४ ॥

भेदकातिशयोक्तिश्चेदेकस्यैवान्यतोच्यते ।
अहो अन्यैव लावण्यलीला बालाकुचस्थले ॥ ४५ ॥

यत्र तस्मादेव तस्य भेद उच्यते सा भेदकातिशयोक्तिः । यथाऽहो इत्यादौ । लावण्यलीलाया लावण्यलीलात एव भेदप्रतिपादनादित्याह भेदकेति ॥ ४५ ॥

**अन्वयः**—यत्र एकस्यैव अन्यता उच्यते चेत् ( तत्र ) भेदकातिशयोक्ति ( भवति उदाहरति ) अहो बालाकुचस्थले अन्यैव लावण्यलीला वर्तते ।

**व्याख्या**—भेदकातिशयोक्तिमाह—यत्र स्थले एकस्यैव पदार्थस्य = वस्तु अन्यता = भिन्नता उच्यते = कथ्यते तत्र भेदकातिशयोक्तिर्भवति । उदाहरति अ इति—बालायाः नवोढायाः कुचस्थले = स्तने लावण्यलीला = सौन्दर्यशोभा अ एव = लोकप्रसिद्धेतरैव । अहो = आश्चर्यम् । अत्र लोकप्रसिद्धलावण्यस्याभावे बालाकुचलावण्यस्य भेदकथनात् भेदकातिशयोक्तिनामा अलङ्कारः ।

**हिन्दी**—जहाँ एक ही वस्तु को भिन्न बताया जाय वहाँ भेदकातिशयो

अलंकार होता है। जैसे—बाला के कुचमण्डल की शोभा अन्य ही है। यहाँ लोकप्रसिद्ध शोभा से विलक्षण बालाकुचमण्डल की शोभा का वर्णन किया गया है यद्यपि वह विलक्षण नहीं है। इसलिए भेदकातिशयोक्ति अलंकार हुआ॥ ४५॥

**रूपकातिशयोक्तिश्चेद्रूप्यं रूपकमध्यगम्।**
**पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः॥ ४६॥**

यत्र रूपकान्तःस्थित रूप्यं तत्र रूपकातिशयोक्तिः। यथा पश्येत्यदो। अत्र नीलोत्पलशराभ्यां रूपकाभ्यामेव लाचनकटाक्षरूपस्य रूप्यस्य प्रतीतेः पृथक्पदेनाऽनभिधानादित्याह—रूपकेति॥ ४६॥

**अन्वयः**—रूप्यम् रूपकमध्यगं चेत् (तदा) रूपकातिशयोक्तिः (स्यात्) उदाहरति—पश्य। नीलोत्पलद्वंद्वात्। शिताः शरा निःसरन्ति।

**व्याख्या**—रूपकातिशयोक्तिमाह—रूप्यम्=उपमेयम् प्रकृतम् रूपकमध्यगम्= उपमाननिगीर्णं चेत्=यदि स्यात् तदा रूपकातिशयोक्तिः स्यात्। उदाहरति— पश्येति। नीलोत्पलस्य=नीलकमलस्य द्वन्द्वात्=युगलात् शिताः=तीक्ष्णाः शराः= बाणाः निःसरन्ति=निर्गच्छन्तीति पश्य। अत्र उपमानेन नीलकमलद्वंद्वेन कवलितान नेत्रद्वन्द्वान् मानभूतशरेण निगीर्णाः कटाक्षा निःसरन्ति इत्यर्थः। अत्र रूपकाभ्यां=नीलकमलद्वन्द्वशराभ्यां=नेत्रयुगलकटाक्षयोः रूप्ययोरुपमेययोः कुक्षिस्वीकरणात् रूपकातिशयोक्तिनामा अलंकारः।

**हिन्दी**—जहाँ रूप्य (उपमेय) रूपक (उपमान) के अन्दर हो वहाँ रूपकातिशयोक्ति अलंकार होता है। जैसे—देखो, दो नीलकमल से बाण निकल रहे हैं। यहाँ उपमान नीलकमल उपमेय नेत्र और बाणरूप उपमान से कटाक्ष रूपित हैं अतः यहाँ रूपकातिशयोक्ति हुई। अन्यत्र—अकालजलदावली किंतु नाम मुक्तावली पर्वणि विधुन्तुदस्तु वतु नाम शीतद्युतिम्। इदन्तु महददद्भुतं पतनयापि विद्युल्लतावलम्बि कनकाचलद्वयमधोमुखं नृत्यति॥ यहाँ स्नानानन्तर झुक कर केश के जल को निचोड़ती नायिका को देखकर किसी नायककृत उसका वर्णन है। यह रूपकातिशयोक्ति का सुन्दर उदाहरण है॥ ४६॥

**प्रौढोक्तिस्तदशक्तस्य तच्छक्तत्वावकल्पनम्।**
**कलिन्दजातीररुहाः श्यामलाः सरलद्रुमाः॥ ४७॥**

**तत्राऽसमर्थस्य सामर्थ्यवर्णने प्रौढोक्तिः ॥ ४७ ॥**

**अन्वयः**—तदशक्तस्य तच्छक्तत्वावकल्पनम् प्रौढोक्तिः । ( भवति उदाहरति ) कालिन्दजातीररुहाः सरलद्रुमाः श्यामलाः ।

**व्याख्या**—प्रौढोक्त्यलंकारं व्याचष्टे—तदशक्तस्य = तत्र असमर्थस्य तच्छक्तत्वावकल्पनम् = तत्समर्थत्ववर्णनम् प्रौढोक्तिः = तन्नामा अलंकारः । कलिन्दजा = यमुना तस्याः तीरद्रुमाः = तटरुहाः वृक्षाः । सरलद्रुमाः = सरल नामानो वृक्षाः श्यामलाः = नीला भवन्ति । कालिन्दी तटोत्पन्नत्वादेषां नीलत्वमित्यर्थः । अत्र यमुनातटरोहणस्य नैल्यजनना सामर्थ्येऽपि तत्समर्थप्रतिपादनात् प्रौढोक्तिरलंकारः ।

**हिन्दी**—जो जिस कार्य के असमर्थ हैं उसको उसके समर्थ समझना प्रौढोक्ति अलंकार है । उदाहरण—यमुना के तीर के सरल नामक पेड़ श्याम हैं । यहाँ यमुना के तट में यह सामर्थ्य नहीं है कि वह अपने यहाँ नील वृक्ष को उत्पन्न कर सके तथापि उसका नीलवृक्षोत्पादन वर्णन करना प्रौढोक्ति है ॥ ४७ ॥

**सम्भावनं यदीत्थं स्यादित्यूहोन्यप्रसिद्धये ।**
**सिक्तं स्फटिककुम्भान्तःस्थितिश्वेतीकृतैर्जलैः ।**
**मौक्तिकं चेल्लतां सूते तत्पुष्पैस्ते समं यशः ॥ ४८ ॥**

**यथा स्फटिकस्थिते जलश्वैत्ये इत्थं यदि स्यात्तदेत्थं स्यादिति सम्भावनम् । यथा स्फटिकस्थितिश्वेतजलसिक्तमौक्तिकप्रसूता लता चेत्स्यात्तदा तत्पुष्पैस्ते यशः समं स्यादित्याह—सम्भावनमिति ॥ ४८ ॥**

**अन्वयः**—अन्यप्रसिद्धये यदि इत्थं ऊहः स्यात् ( तदा ) सम्भावना ( भवति उदाहरति ) स्फटिककुम्भान्तःस्थितिश्वेतीकृतैः जलैः सिक्तं मौक्तिकं चेत् लता सूते ( तदा ) तत्पुष्पैः समं ते यशः स्यात् ।

**व्याख्या**—सम्भावनालंकारमाह—सम्भावनेति । अन्यस्य भिन्नस्य कार्यस्य प्रसिद्धये = प्रकाशनाय । यदि = चेत् इत्थम् = एवं स्यात् उदाऽन्यत्कार्यं स्यादिति । यत्र = यस्मिन् स्थले ऊहः = तर्कः स्यात् तत्र सम्भावनालंकारः स्यात् । उदाहरति—सिक्तमिति । स्फटिकस्य = स्फटिकमणिकुम्भस्य अन्तःस्थित्या = मध्यावस्थानेन श्वेतीकृतैः = श्वेततामापादितैः जलैः सलिलैः सिक्तं = कृतसेकम् मौक्तिकम् = मुक्ता यदि लतां = वल्लीं सूते = जनयति तदा हे राजन् ! तत्कुसुमैः सदृशम् = समानम् तव यशः = कीर्तिः स्यात् । अत्र यदीत्थं स्यात्तदा एवं स्यात् इत्यूहस्य वर्तमानत्वात् सम्भावनालंकारः ।

हिन्दी—किसी अन्य कार्य की सिद्धि के लिये यदि ऐसा हो तो ऐसा हो ऐसा कहना सम्भावना अलंकार होता है। जैसे—हे राजन्! यदि स्फटिक मणि से बने कलश के अन्दर रहने से सफेद हुए जल से सींचा हुआ मोती लता के अङ्कुर को पैदा करे तथा वह लता श्वेतफूल फूले तो उस फूल से तुम्हारे यश का वर्णन किया जा सकता है। यहाँ यदि ऐसा हो तो ऐसा है ऐसा कहने से सम्भावना अलंकार हुआ। अन्य ग्रन्थों में इसको भी अतिशयोक्ति का ही भेद कहा गया। यद्यर्थोक्तौ प्रकल्पनम् : यदि स्यान्मण्डले सक्तमिन्दोरिन्दीवरद्वयम्। तेनोपमीयते तस्या वदनं चारुलोचनम्॥ यह उदाहरण है॥ ४८॥

वाञ्छितादधिकप्राप्तिरयत्नेन प्रहर्षणम्।
दीपमुद्द्योतयेद्यावत्तावदभ्युदितो रविः॥ ४९॥

वाञ्छितेति॥ ४९॥

अन्वयः—अयत्नेन वाञ्छितात् अधिकप्राप्तिः प्रहर्षणम् नामालंकारः ( भवति उदाहरति ) यावद्दीपं उद्योतयेत् तावत् रविः अभ्युदितः।

व्याख्या—प्रहर्षणालंकारमाह—अयत्नेन = प्रयत्नं विनैव वाञ्छितात् = ईप्सितात्। अधिकस्य प्राप्तिः अधिकप्राप्तिः = विशेषलाभः यत्र स्यात् तत्र प्रहर्षणालंकारः भवति। उदाहरति—दीपमिति—यावत् दीपं = प्रदीपं उद्योतयेत् तावत् = तावत्कालं रविः = सूर्यः अभ्युदितः = उदितः। अत्र दीपप्रकाशमात्रमिच्छतः पुरुषस्य ततोऽनन्तगुणिनाधिकसूर्यप्रकाशलाभात् प्रहर्षणालंकारः।

हिन्दी—जहाँ प्रयत्न के बिना ही ईप्सित से अधिक वस्तु की प्राप्ति हो वहाँ प्रहर्षणालंकार होता है। जैसे—दीप जलाना ही चाहता था कि सूर्य उग गये। यहाँ दीप के प्रकाशमात्रकी अभिलाषावाले के लिए उससे अनेक गुना अधिक सूर्य का प्रकाश मिल गया इसलिए यहाँ प्रहर्षणालंकार हुआ॥ ४९॥

इष्यमाणविरुद्धार्थसम्प्राप्तिस्तु विषादनम्।
दीपमुद्द्योतयेद्यावत्तावन्निर्वाण एव सः॥ ५०॥

इष्यमाणाद्विरुद्धोऽर्थो यत्र प्राप्यते तद्विषादनमित्याह—इष्यमाणेति।

अन्वयः—इष्यमाणविरुद्धार्थसम्प्राप्तिः तु विषादनम् अलंकारः। (उदाहरति) दीपमुद्योतयेत् यावत् तावत् एष निर्वाण एव।

व्याख्या—विषादनमाचष्टे—इष्यमाणेति। इष्यतेऽसावितीष्यमाणः = अभिल-

षितस्तस्मात् विरुद्धार्थस्य=विपरीतपदार्थस्य सम्प्राप्तिः=लाभः विषादनम् ना
लंकारः। उदाहरति—दीपामिति। यावत्=यावत्कालं दीपम् उद्योतयेत्=वर्ति
मुद्गमयेत् तावत् कालमसौ निर्वाणः=शान्त एवाभूत्। अत्र दीपोद्योतनाभिलाषि
पुरुषस्य तद् विरुद्धदीपनिर्वाणोपस्थित्या विषादनालंकारः।

हिन्दी—जहाँ ईप्सित वस्तु के विरुद्ध कोई वस्तु मिल जाय वहाँ विषाद
अलंकार होता है। जैसे—प्रकाश बढ़ाने के लिए ज्यों ही दीये को उकसाता
तभी दीपक बुझ गया। यहाँ मन्द हुए दीपक के प्रकाश बढ़ाने के लिए ब
को उकसाते हुए पुरुष के लिए उसके विरुद्ध दीपक बुझ जाने का वर्णन होने
कारण यहाँ विषादन अलंकार हुआ॥ ५०॥

**क्रियादिभिरनेकस्य तुल्यता तुल्ययोगिता।**
**सङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च।**
**प्राचीनाचलचूडाग्रचुम्बिबिम्बे सुधाकरे॥ ५१॥**

यत्राऽनेकस्यैकक्रियादिभिः सम्बन्धस्तत्र तुल्ययोगिता यथा सङ्कुच
न्तीत्यादौ। अत्र सति चन्द्रोदये पद्मस्वैरिणीवदनयोः सङ्कोचवर्णना
त्याह—सङ्कुचन्तीति॥ ५१॥

**अन्वयः**—क्रियादिभिः अनेकस्य तुल्यता तुल्ययोगिता (भवति उदाहरति
सुधाकरे प्राचीनाचलचूडाग्रचुम्बिबिम्बे सति सरोजानि स्वैरिणीवदनानि च सङ्
चन्ति।

**व्याख्या**—तुल्ययोगितालंकारं व्याचष्टे—क्रियादिभिः=क्रियया आदिश
गुणेन वा अनेकस्य=प्रस्तुतानामप्रस्तुतानां वा तुल्यता=साम्यम् तुल्ययोगितालंका
उदाहरति—सङ्कुचन्तीति। सुधाकरे=चन्द्रमसि प्राचीनश्चासावचलः प्राचीनाच
तच्चूडाग्रम् = शिखरं चुम्बतीति तादृश बिम्बम् = मण्डलं यस्य तस्मिन् सति
सरोजानि=कमलानि स्वैरिणीनाम् वदनानि स्वैरिणवदनानि=कुलटामुखानि
सङ्कुचन्ति=निमीलन्ति, स्वैरिणीनां चन्द्रप्रकाशे जारसमीपगमनासम्भवात्।

अत्र चन्द्रोदये वर्णनीये प्रस्तुतयोः स्वैरिणीमुखकमलयोः संकोचरूपैकक्रिय
सम्बन्धात् तुल्ययोगितालंकारः।

**हिन्दी**—जहाँ अनेक प्रस्तुत का अथवा अनेक अप्रस्तुत एक क्रिया अथवा गु
में सम्बन्ध हों वहाँ तुल्ययोगिता अलंकार होता है। उदाहरण—जैसे चन्द्रमा

उदयाचल शिखर पर उदित होने पर कमल और कुलटाओं के मुख संकुचित हो जाते हैं। यहाँ पर चन्द्रोदय-वर्णन के समय प्रस्तुत कमल और कुलटा स्त्री के मुख का संकोच रूप एक क्रिया से सम्बन्ध का वर्णन किया गया है। इसलिए यहाँ तुल्ययोगिता अलंकार हुआ। प्रकाश में कुलटाओं की स्वेच्छाचारिता बन्द हो जाने के कारण अप्रसन्नता से उनके मुख मलिन हो जाते हैं॥ ५१॥

**प्रस्तुताप्रस्तुतानां च तुल्यत्वे दीपकं मतम्।**
**मेधां बुध सुधामिन्दुर्बिभर्ति वसुधां भवान्॥ ५२॥**

तुल्ययोगितायां प्रस्तुतानामेवैकक्रियादिसम्बन्धः। पङ्कजानामिव स्वैरिणीमुखानां तदा प्रस्तुतत्वात्। दीपके प्रस्तुताप्रस्तुतयोस्तमाह—प्रस्तुतेति। मेधामिति। अत्र राजैव प्रस्तुतः॥ ५२॥

**अन्वयः**— प्रस्तुताप्रस्तुतानाञ्च तुल्यत्वे दीपकम् (भवति उदाहरति) बुधः मेधां, चन्द्रः सुधां, भवान् वसुधा बिभर्ति।

**व्याख्या** दीपकमाह—प्रस्तुतानां=प्रकृतानाम् अप्रस्तुतानां च समानैकगुण-क्रियासम्बन्धे दीपकं नामालङ्कारः (भवति) उदाहरति मेधामिति। बुधः= पण्डितः मेधाम्=धारणावती बुद्धिम्। चन्द्रः=शशी सुधाम्=अमृतम् भवान् वसु-धाम्=धरित्रीम् बिभर्ति=धारयति। अत्र प्रस्तुतस्य भवत्शब्दप्रतिपाद्यस्य राज्ञः बुधचन्द्रयोरप्रस्तुतयोश्चैकधारणरूपक्रियासम्बन्धवर्णनाद् दीपकालङ्कारः।

**हिन्दी**— जहाँ प्रस्तुत और अप्रस्तुत का एक गुण तथा क्रिया रूप में सम्बन्ध हो वहाँ दीपक अलंकार होता है। जैसे—विद्वान् बुद्धि, चन्द्रमा कान्ति तथा आप पृथ्वी को धारण करते हैं। यहाँ अप्रस्तुत बुध चन्द्र और प्रस्तुत राजा का धारणरूप एक क्रिया में सम्बन्ध होने के कारण यहाँ दीपक अलंकार हुआ।

जैसे—चौखट पर रखा दीपक भीतर बाहर दोनों तरफ प्रकाश करता है उसी तरह एक गुण-क्रिया रूप धर्म प्रस्तुत और अप्रस्तुत दोनों को प्रकाशित करता है इसलिए दीपक की तरह होने के कारण इसका नाम दीपक पड़ा॥५२॥

**आवृत्ते दीपकपदे भवेदावृत्तिदीपकम्।**
**दीप्त्याग्निर्भाति भातीन्दुः कान्त्या भाति रविस्त्विषा॥ ५३॥**

क्रियावाचकपदावृत्तावावृत्तिदीपकम्। यथा दीप्त्येत्यादीत्याह—आवृत्त इति॥ ५३॥

**अन्वयः**—दीपकपदे आवृत्ते आवृत्तिदीपकं ( भवति उदाहरति ) अग्निः दीप्त्या भाति, इन्दुः कान्त्या भाति, रविः त्विषा भाति ।

**व्याख्या**—आवृत्तिदीपकं व्याख्याति—अत्र दीपकपदे पद्यते=ज्ञायतेऽर्थोऽनेनेति व्युत्पत्त्या पदशब्देनार्थस्यापि ग्रहणं भवति । तेन पदे अर्थे उभयरूपे वा आवृत्ते असकृत् पठिते सति आवृत्तिदीपकं नामालङ्कारो भवति । तत्र दीपकस्य त्रयो भेदाः भवन्ति । तथोक्तं दण्डिना—

अर्थावृत्तिः पदावृत्तिरुभयावृतिरित्यपि ।
दीपकस्थानमेवेष्टमलङ्कारत्रयं बुधाः ॥

त्रिविधं दीपकमुदाहरति—दीप्त्येति । अग्निः=वह्निः दीप्त्या=प्रकाशेन भाति= तेजसा शोभते । रविः = सूर्यश्च त्विषा भाति । अत्र भातीति पदस्य तदर्थस्य च आवृत्तिः । पदार्थावृत्तिरूपतया उभयावृत्तिरपि । तेनात्रावृत्तिदीपकमलङ्कारः । अत्राग्निः प्रस्तुतः चन्द्रसूर्यौ चाप्रस्तुतौ । एतयोरेकक्रियारूपधर्मसम्बन्धेन दीपकम् ।

**हिन्दी**—जहाँ गुण और क्रियावाचक दीपकपद अथवा अर्थ की आवृत्ति की गयी हो वहाँ आवृत्तिदीपक अलंकार होता है । जैसे अग्नि ज्वाला से, चन्द्र कान्ति से और सूर्य तेज से शोभित होते हैं । यहाँ क्रिया की अथवा उसके अर्थ की आवृत्ति की गई है । इसलिये आवृत्ति दीपक हुआ । यहाँ अग्नि वर्णन प्रस्तुत है और चन्द्र-सूर्य का वर्णन अप्रस्तुत है । इन सबका एक क्रिया रूप धर्म में सम्बन्ध होने के कारण दीपक हुआ ॥ ५३ ॥

**वाक्ययोरर्थसामान्ये प्रतिवस्तूपमा मता ।**
**तापेन भ्राजते सूरः शूरश्चापेन राजते ॥ ५४ ॥**

**यत्र वाक्ययोरर्थयोः साम्यं भवति तत्र प्रतिवस्तूपमा । यथा तापेनेति । अत्र तापेनौष्ण्येन सूर्यो राजत इति प्रथमवाक्यार्थः । धनुषा शूरो राजत इति द्वितीयः । अनयोः साम्यं प्रतिवस्तूपमा । अत्र तापधनुषोः सूरशूरयोः शोभयोश्च परस्परं साम्यात् । एवं च यत्र यत्र वाक्यद्वयगतानां पदार्थानां सर्वेषां परस्परं साम्यं तत्र प्रतिवस्तूपमेति सारम् ॥ ५४ ॥**

**अन्वयः**—वाक्ययोः अर्थसामान्ये प्रतिवस्तूपमा मता । ( उदाहरति ) सूर्यः तापेन भ्राजते, शूरः चापेन राजते ।

**व्याख्या**—प्रतिवस्तूपमामाह—वाक्ययोरिति । वाक्ययोः=उपमेयवाक्यस्य उप-

मानवाक्यस्य च अर्थस्य = अभिधेयस्य सामान्ये = तुल्यताऽयम् प्रतिवस्तूपमालङ्कार मता = इष्टा। यत्र उपमानोपमेययोरेकसाधारणो धर्मः पृथक् पदेन निर्दिश्यते सा प्रतिवस्तूपमा। उदाहरति—तापेनेति। सूर्यः = दिवाकरः तापेन = तेजसा भ्राजते, शूरः = वीरः चापेन = धनुषा राजते = शोभते। अत्र राजते भ्राजते इत्येक एव सामान्यधर्मः पुनरुक्तिभिया पृथक् पदेन निर्दिष्टः। ततोऽत्र प्रतिवस्तूपमा अलङ्कारो भवति।

हिन्दी—उपमान और उपमेय के रूप में पृथक् निर्दिष्ट वाक्य में जहाँ सामान्य धर्म एक ही हों, और पृथक् पद से कहा गया हो वहाँ प्रतिवस्तूपमा अलंकार होता है। सूर्यः तापेन भ्राजते, शूरः चापेन राजते, यहाँ दोनों वाक्यों में एक ही सामान्य धर्म भ्राजते, राजते इन दो शब्दों से कहा गया है। दोनों वाक्यों का परस्पर साम्य गम्य हैं। जैसे सूर्य वैसे शूर। इसलिये यहाँ प्रतिवस्तूपमा अलङ्कार हुआ ॥ ५४ ॥

चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलंकृतिः।
स्यान्मल्लप्रतिमल्लत्वे सङ्ग्रामोद्दामहुंकृतिः ॥ ५५ ॥

दृष्टान्तमाह—चेदिति। बिम्बप्रतिबिम्बभावश्चेत् द्वयोस्तदा तयोर्दृष्टान्तोऽलङ्कृतिः। मल्लप्रतिमल्लत्वे तु तयोः सङ्ग्रामे उद्दामालङ्कृतिरित्यर्थः। यथा बिम्बप्रतिबिम्बयोरेका छाया भवति तत्र बिम्बप्रतिबिम्बभावस्तयोः। यथा प्रकृत एव श्लोके। तथा हि—बिम्बप्रतिबिम्बभावश्चेद्वाक्यार्थयोस्तदा तयोर्दृष्टान्तोऽलङ्कृतिः स्यादिति पूर्वार्द्धाऽर्थः। अनयोः समच्छायत्वमस्त्येव चेदिति असावलङ्कृतिरिति द्विवचनस्य चोभयत्राऽन्वयादीदृशि स्थले दृष्टान्तोऽलङ्कृतिरिति युक्तमेव। यथा सङ्ग्रामोद्दामहुंकृतिः मल्लादित्वेऽलङ्कृतिस्तथा प्रकृते दृष्टान्त इति दृष्टान्तदार्ष्टान्तिकभावस्य स्फुटमवभासनात् ॥ ५५ ॥

अन्वयः—विम्बप्रतिबिम्बत्वं चेत् ( तदा ) दृष्टान्तः अलंकृतिः ( भवति ) ( उदाहरति ) मल्लप्रतिमल्लत्वे संग्रामोद्दामहुंकृतिः स्यात्।

व्याख्या—दृष्टान्तालंकारं लक्षयति—चेदिति। बिम्बश्च प्रतिबिम्बश्चेति बिम्बप्रतिबिम्बौ तयोर्भावः बिम्बप्रतिबिम्बत्वं चेत् = यदि स्यात् दृष्टान्तः अलंकृतिः स्यात्। दृष्टः = ज्ञातः अन्तः = निश्चयः यत्र स दृष्टान्तः। एवं च यत्रोपमानोप-

मेयवाक्ययोः भिन्नौ एव धर्मौं विम्बप्रतिविम्बभावेन निर्दिष्टौ तत्र दृष्टान्तः । उदाहरति—स्यादिति । मल्लश्च प्रतिमल्लश्चेति मल्लप्रतिमल्लौ तयोर्भावः मल्लप्रतिमल्लत्वं तस्मिन्=भटप्रतिभटत्वे सति संग्रामे उद्दाम्नी=निरर्गला हुँकृतिः=गर्जना स्यात्, तथैव बिम्बप्रतिबिम्बत्वे सत्येव दृष्टान्तालंकारः भवति । उदाहरणमप्येतदेव पद्यम् । मल्लप्रतिमल्लत्वे यथा संग्रामोद्दामहुँकृतिस्तथैव बिम्बप्रतिबिम्बत्वे दृष्टान्तालंकृतिः । इति योजनया मल्लप्रतिमल्लत्वबिम्बप्रतिबिम्बत्वयोर्दृष्टान्तहुँकृत्योश्च बिम्बप्रतिबिम्बभावादत्र दृष्टान्तालङ्कारः ।

**हिन्दी**—उपमान और उपमेय वाक्यों के विम्बप्रतिविम्बभाव को दृष्टान्तालंकार कहा गया है । जैसे दर्पण में मुख का प्रतिविम्ब दिखता है उसी तरह जहाँ एक वाक्य दूसरे वाक्य की तरह हो वहाँ दृष्टान्तालंकार होता है । जैसे—परस्पर जोड़ के योद्धा होने पर संग्राम में घोर हुँकार होता है । उसी प्रकार बिम्बप्रतिबिम्बभाव होने पर दृष्टान्तालङ्कार होता है । इस श्लोक में मल्लप्रतिमल्लत्व बिम्बप्रतिबिम्बत्व और दृष्टान्त हुँकृति का परस्पर बिम्बप्रतिबिम्बभाव है । इसलिए दृष्टान्त अलंकार हुआ । यद्यपि अर्थ की दृष्टि से यहाँ बिम्बप्रतिबिम्बभाव है तथापि विभक्ति आदि भिन्न होने के कारण शाब्दिक बिम्बप्रतिबिम्बभाव नहीं है इसलिए दूसरा उदाहरण अगले श्लोक में देते हैं ॥ ५५ ॥

**दृष्टान्तश्चेद्भवन्मूर्तिस्तन्मृष्टा दैवदुर्लिपिः ।**
**जाता चेत्प्राक् प्रभा भानोस्तर्हि याता विभावरी ॥ ५६ ॥**

उदाहरणान्तरमाह—दृष्टेति । कस्यचिद्भक्तस्य नारायणं प्रत्युक्तिः । अन्तर्हृदि भवन्मूर्तिश्च दृष्टा इत्यादिरर्थः ॥ ५६ ॥

**अन्वयः**—चेत् अन्तः भवन्मूर्तिः दृष्टा तत् दैवदुर्लिपिः मृष्टा चेत् भानोः प्रभा प्राग् जाता तर्हि विभावरी याता ।

**व्याख्या**—दृष्टान्तहुँकृत्योर्लिङ्गभेदेन बिम्बप्रतिबिम्बभावस्यास्पष्टतयोदाहरणान्तरमाह—दृष्टान्तश्चेत् । हे भगवन् ! अन्तः=हृदये चेत् यदि । भवन्मूर्तिः=त्वदाकारः दृष्टा=अवलोकिता । तत्=तदा । दैवस्य=भाग्यस्य दुर्लिपिः=दुर्भाग्यलिपिः मृष्टा=प्रोञ्छिता । नष्टेति भावः । तव दर्शनेन दुर्भाग्यं नश्यति । प्राक्=प्राच्याम् । चेत्=यदि भानोः=सूर्यस्य । प्रभा=दीप्तिः जाता=उत्पन्ना तदा=तर्हि विभावरी=रात्रिः याता=गता । सति सूर्यप्रकाशे रात्रिर्यथा नश्यति तथा

वद्दर्शनेन दौर्भाग्यं नश्यति। अत्र प्रतिवस्तूपमावत्साधारणधर्मस्य भिन्नपदेनो-पादानम्। किन्तु बिम्बप्रतिबिम्बभावत्वम्।

हिन्दी—दृष्टान्त का द्वितीय उदाहरण देते हैं—प्रथम उदाहरण में हुंकृति और दृष्टान्त शब्द में लिङ्गभेद होने के कारण स्पष्ट भेद नहीं मालूम पड़ता इसलिए दूसरा उदाहरण देते हैं। कोई भक्त भगवान् से कहता है यदि आपकी कृति का अन्तःकरण में साक्षात्कार हो गया तो उसी समय अभाग्य का लेख मिट जाता है। जैसे पूर्व दिशा में सूर्य की कान्ति फैलने पर रात्रि का नाश हो जाता है। यहाँ उपमान और उपमेय वाक्य का बिम्बप्रतिबिम्बभाव होने के कारण दृष्टान्त अलंकार हुआ ॥ ५६ ॥

**वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना।**
**या दातुः सौम्यता सेयं सुधांशोरकलङ्कता ॥ ५७ ॥**

यत्र सादृश्याद्वाक्यार्थयोरैक्यमारोप्यते सा निदर्शना। यथा येत्यादि। दातृसौम्यताचन्द्राकलङ्कतयोर्वाक्यार्थयोरसंभावितत्वेन समयोरैक्यारोपस्य स्फुटत्वादिदमुभयमपि असत्त्वेनैकमित्यर्थः ॥ ५७ ॥

अन्वयः—सदृशयोः वाक्यार्थयोः ऐक्यारोपो निदर्शना ( अलंकारः भवति उदाहरति ) या दातुः सौम्यता सा इयं सुधांशोः अकलङ्कता।

व्याख्या—निदर्शनां व्याख्याति—वाक्यार्थयोरिति। सदृशयोः तुल्ययोः वाक्यार्थयोः=वाक्याभिधेययोः ऐक्यारोपः=एकताध्यवसायः निदर्शना=निदर्शनाख्योऽलंकारः। निश्चित्य दर्शनं सादृश्यप्रकाशनं निदर्शना अनुपपद्यमानयोः वाक्यार्थयोर्यत्रौपम्यबोधे पर्यवस्यति तत्र निदर्शना। उदाहरति—या दातुरिति। या दातुः=वदान्यस्य सौम्यता=सौमनस्यम्। सा इयं सुधांशोः=चन्द्रमसः अकलंकता=कलंकशून्यत्वम्। अत्र दातृरूपसौम्यत्वस्योपमेयवाक्यार्थस्य चन्द्राकलङ्कत्वरूपोपमानवाक्यस्य च यत्तच्छब्दाभ्यामैक्यारोपात् निदर्शनालङ्कारः। 'अभवन्मतसम्बन्धः उपमा परिकल्पकः' इति साहित्यदर्पणे निदर्शनालक्षणमुक्तम्।

हिन्दी—जहाँ भिन्न दो वाक्यों में सादृश्य के कारण एकता का आरोप हो उसको निदर्शना कहते हैं। उदाहरण—जो दाता में सौम्यता है वही सुधांशु में अकलंकता है। यहाँ यत् तत् शब्द से दोनों की एकता बतायी गयी है। इसलिए यहाँ निदर्शनालङ्कार हुआ। एक वस्तु का दूसरा होना असम्भव है इसलिए सादृश्य में

परिणत हो जाता है। दाता की सौम्यता चन्द्रमा की अकलंकता के सदृश है। ५७

व्यतिरेको विशेषश्चेदुपमानोपमेययोः।
शैला इवोन्नताः सन्तः किं तु प्रकृतिकोमलाः ॥ ५८ ॥

उपमानाऽपेक्षयोपमेयस्य विशेषे व्यतिरेकः। यथा शैला इवेत्यादौ। अत्र ह्युन्नतत्वेन साम्ये सति सकोमलत्वेन विशेषोपादानात् इत्याह—व्यतिरे... इति ॥ ५८ ॥

**अन्वयः**—चेत् उपमानोपमेययोः विशेषः ( तदा ) व्यतिरेकः भवति उदाहर... सन्तः शैला इव उन्नताः किन्तु प्रकृतिकोमलाः ( भवन्ति )।

**व्याख्या**—व्यतिरेकालंकारं लक्षयति—चेत् = यदि उपमानोपमेययोः विशेषः वैलक्षण्यं भवति तदा व्यतिरेकः = तन्नामा अलंकारः भवति। उदाहरति—शै... इति। सन्तः = सज्जनाः शैलाः = पर्वताः इव = यथा उन्नताः—उत्कर्षंगताः किन्तु = परन्तु प्रकृत्या = स्वभावेन कोमलाः = मृदुलाः भवन्ति। अत्र शैलसज्जन... उन्नतिरूपैकधर्मसत्वेऽपि सज्जनानां कोमलत्वेनाधिक्यवर्णनात् व्यतिरेकालङ्कारः एतस्यालङ्कारस्यान्यैरालंकारिकैर्बहवो भेदाः प्रदर्शिताः जिज्ञासुभिः तत एव द्रष्टव्या

**हिन्दी**—जहाँ उपमान से उपमेय में विशेष का वर्णन किया जाय अर्था... अधिकता अथवा न्यूनता का वर्णन किया जाय वहाँ व्यतिरेकालंकार होता है उदाहरण जैसे—सज्जन पर्वत की तरह उन्नत होते हैं। किन्तु स्वभाव से कोम... होते हैं—पत्थर कठोर, सज्जन कोमल हृदय वाले होते हैं। यहाँ उपमान शैल... उन्नति उसमें होती है किन्तु कोमल होते हैं ॥ ५८ ॥

सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः।
दिगन्तमगमद्यस्य कीर्तिः प्रत्यर्थिभिः सह ॥ ५९ ॥

जनमनोहारी यत्र सहभावस्तत्र सहोक्तिः। यथा—दिगन्तमित्यादि... पुत्रेण सहागत इत्यादिवारणाय जनरञ्जन इति। अत्र चमत्कारविशेष... भावादित्याह—सहोक्तिरिति ॥ ५९ ॥

**अन्वयः**—जनरञ्जनः सहभावः भासते चेत् तदा सहोक्तिः (भवति उदाहर... यस्य कीर्तिः प्रत्यर्थिभिः सह दिगन्तमगमत्।

**व्याख्या**—सहोक्तिं व्याचष्टे—सहोक्तिरिति। जनरञ्जनः = लोकमनोहर... सहभावः—साहित्यम्। भासते = प्रकाशते तदा सहोक्तिनामा अलंकारः भवति

जनरञ्जनविशेषणेन 'पुत्रेण सह आगतः पिता' अत्र नायमलंकारः। सहृदयाह्लादकचमत्कारजनकार्थाभावात्। उदाहरणं यथा—दिगन्तमिति। यस्य = राज्ञः कीर्तिः = यशः। प्रत्यर्थिभिः = शत्रुभिः सह दिगन्तं = दिशोऽन्तं गता = प्राप्ता। प्रथमान्ततया कीर्तिपदस्य प्राधान्यात् प्रत्यर्थिपदस्य तृतीयान्ततया गुणत्वादुभयोरनयोर्युगपद् दिगन्तगमनरूपक्रियाश्रयत्वेन सहभावात् सहोक्तिरलंकारः।

हिन्दी—मनोहर रूप से जहाँ दो पदार्थों का सहभाव बताया जाय वहाँ सहोक्तिरलकार होता है। जैसे—जिस राजा की कीर्ति शत्रुओं के साथ दिशाओं के अन्त में चली गयी। राजा की विजय-यात्रा का समाचार सुनकर शत्रु भाग कर दिशाओं के अन्त में चले गये। आपके प्रताप का यश दिशाओं के अन्त तक फैल गया यहाँ यह अर्थ बोधित होता है। जनरञ्जन इस विशेषण के कारण 'पुत्रेण सहागतः पिता' इत्यादि स्थल पर यह अलंकार नहीं होगा क्योंकि यहाँ कोई चमत्कार नहीं है ॥ ५९ ॥

विनोक्तिश्चेद्विना किंचित्प्रस्तुतं हीनमुच्यते।
विद्या हृद्यापि सावद्या विना विनयसम्पदम् ॥ ६० ॥

केनचिद्विना यत्र प्रस्तुतहीनता तत्र विनोक्तिः। यथा—विनयं विना विद्याया इत्याह—विनोक्तिरिति ॥ ६० ॥

**अन्वयः**—चेत् किञ्चित् विना प्रस्तुतम् हीनम् उच्यते ( तदा ) विनोक्तिः ( भवति उदाहरति ) सा विद्या हृद्या अपि विनयसम्पदं विना अवद्या ( भवति )।

**व्याख्या**—विनोक्त्यलंकारं व्याचष्टे—विनोक्तिरिति। चेत् = यदि किञ्चित् विना = केनापि वस्तुनोऽभावेन प्रस्तुतम् = वर्णनीयम् प्रकृतम् हीनं = दुष्टम् उच्यते चेत् सा विद्या हृद्या = मनोहराऽपि विनयसम्पदम् = नम्रतां विनयं विना अवद्या = निन्दनीया। 'विद्या ददाति विनयमित्युक्तत्वात्। अत्र वर्णनीयायां विद्यायां विनय विना हीनत्वप्रतिपादनात् विनोक्तिः। इयं क्वचिद् विना शब्देन शोभनत्वप्रतिपादनेऽपि ···· 'विना खलैर्विभात्येषा राजेन्द्र भवतः सभा' इति कुवलयानन्दे।

अत्र विना शब्देन विनार्थकशब्दः गृह्यते तेनैतदर्थवाचकानां ऋते अन्तरेणेत्यादीनां प्रयोगेऽप्ययमलङ्कारो भवति।

हिन्दी—जहाँ वर्णनीय पदार्थ की किसी के बिना न्यूनता की प्रतीति हो वहाँ विनोक्ति अलंकार होता है। यह अलंकार विनार्थक अन्य शब्दों के प्रयोग में भी

होता है। जैसे—जिन्होंने चन्द्रमण्डल को नहीं देखा उस कमलिनी का जन्म व्यर्थ है। इस स्थान पर बिना शब्द के न रहने पर भी तदर्थ शब्द होने के कारण विनोक्ति अलंकार है। उदाहरण—जैसे सुन्दर विद्या भी विनय के बिना निन्दनीय है। यहाँ विद्या में विनय के बिना न्यूनता ( निकृष्टता ) बतायी गयी है इसलिये यहाँ विनोक्ति अलंकार हुआ ॥ ६० ॥

**समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ।**
**अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः ॥ ६१ ॥**

**यत्र प्रस्तुतवर्णनयैवाऽप्रस्तुतमवगम्यते सा समासोक्तिः। यथाऽय-मित्यादौ। अत्र प्रस्तुतविशेषणमहिम्नैव कामिनीमुखचुम्बनस्य प्राप्तेरित्याह—समासेति ॥ ६१ ॥**

**अन्वयः**—चेत् प्रस्तुते अप्रस्तुतस्य परिस्फूर्तिः ( तदा ) समासोक्तिः ( उदाहरति ) पश्य अयं रक्तः चन्द्रमाः ऐन्द्रीमुखं चुम्बति ।

**व्याख्या**—समासोक्तिं व्याचष्टे—समासोक्तिरिति । चेत्=यदि प्रस्तुते=वर्णनीये । अप्रस्तुतस्य = अप्रकृतस्य परिस्फूर्तिः तदा समासोक्तिनामा अलङ्कारो भवति । उदाहरति—अयमिति । पश्य=अवलोकय । अयं = पुरो दृश्यमानः रक्तः=रक्तवर्णः चन्द्रमाः=ऐन्द्र्या पूर्वदिशः मुखम् = अग्रभागं चुम्बति=स्पृशति उदेति । अत्र चन्द्रगतपुंस्त्वेन ऐन्द्रीगतस्त्रीत्वेन रक्तत्वकामुकत्वरूपश्लिष्टविशेषण-महिम्ना अप्रस्तुतनायकवृत्तान्तः प्रतीयते । अत्र अनुरक्तः कश्चन नायकः परकामिनी-मुखं चुम्बतीत्यप्रस्तुतव्यवहारप्रतीतिः प्रस्तुतवर्णनेन परिस्फुरतीति समासेन संक्षेपेण प्रस्तुताप्रस्तुतयोर्वर्णनात् समासोक्तिनामालङ्कारः ।

**हिन्दी**—जहाँ प्रस्तुत वृत्तान्त के वर्णन से अप्रस्तुत वृत्त का ज्ञान होता है वहाँ पर ( समासेन संक्षेपेणोभयोः वर्णनात् ) संक्षेप से दोनों के वर्णन होने कारण समासोक्ति अलंकार होता है। तात्पर्य यह है कि जहाँ समान कार्य, लिङ्ग और विशेषण से प्रस्तुत से अप्रस्तुत के वृत्त का बोध हो वहाँ समासोक्ति अलंकार होता है। जैसे—देखो वह चन्द्रमा पूर्व दिशा के मुख को चूम रहा है। यहाँ चन्द्र पुल्लिङ्ग और दिशा स्त्रीलिङ्ग है। रक्त और चुम्बन द्व्यर्थक विशेषण से किसी नायक का परनायिका का मुख-चुम्बन प्रतीत होता है। इसलिए यहाँ समासोक्ति अलंकार हुआ ॥ ६१ ॥

खण्डश्लेषः पदानां चेदेकैकं पृथगर्थता।
उच्छलद् भूरिकीलालः शुशुभे वाहिनीपतिः ॥ ६२ ॥

यत्र पदं प्रत्येकं भिन्नार्थं स खण्डश्लेषः। यथोच्छलदित्यादौ। अत्र कीलालपदस्य रुधिरजलार्थत्वात् वाहिनीपतिशब्दस्य सेनापतिसरित्पत्यर्थत्वादित्याह—खण्डश्लेष इति ॥ ६२ ॥

अन्वयः—चेत् एकैकं पदानां पृथगर्थता खण्डश्लेषः ( स्यात् ) उदाहरणम्—उच्छलद्भूरिकीलालः वाहिनीपतिः शुशुभे।

व्याख्या—खण्डश्लेषं व्याचष्टे—खण्डश्लेष इति। चेत्=यदि। एकैकं=प्रत्येकवाक्यं प्रति। पदानाम् = समासोक्तिपदावयवानाम् शब्दानां=पृथगर्थता भिन्नार्थता स्यात् तदा खण्डश्लेषः=खण्डश्लेषनामालङ्कारः भवति। उदाहरति—उच्छलदिति। उच्छलन्ति=उद्गच्छन्ति भूरीनि=बहूनि कीलालानि=रुधिराणि जलानि वा यस्य स उच्छलद्भूरिकीलालः। वाहिनीपतिः—वाहिन्याः=सेनायाः नद्याश्च पतिः सेनापतिः समुद्रश्च शुशुभे = रेजे। अत्र उच्छलद्भूरिकीलालः इति समस्तपदे वाहिनीशब्दस्य नदी-सेनारूपार्थद्वयस्य वाचकतया पदानां भिन्नार्थकत्वात् खण्डश्लेषः। श्लेषालङ्कारस्य बहवो भेदाः ग्रन्थान्तरे उक्ताः ते तत्रैव द्रष्टव्याः।

हिन्दी—जहाँ समस्त पद के किसी एक का अनेक अर्थ किया जाय वहाँ खण्डश्लेष होता है। जैसे—उछलते हुए जलतरङ्गों से समुद्र शोभा पा रहा है। चन्द्रालोककार जयदेव ने श्लेषालंकार को दो तरह का माना है—खण्डश्लेष और भङ्गश्लेष। उदाहरण में उच्छलद्भूरिकीलालः और वाहिनीपतिः इन दो शब्दों के खण्ड कीलाल और वाहिनी का क्रम से जल और रुधिर, नदी और सेना इन दो-दो अर्थों की प्रतीति होती है इसलिए यहाँ खण्डश्लेष हुआ ॥ ६२ ॥

भङ्गश्लेषः पदस्तोमस्यैव चेत्पृथगर्थता।
अजरामरता कस्य नायोध्येव पुरी प्रिया ॥ ६३ ॥

यत्राऽर्थद्वयं पदसमुदायस्य स भङ्गश्लेषः। यथाऽजरेत्यत्र। अतीतजरताऽमरताऽजरामाश्रया रतिरित्यर्थद्वयस्य समुदायेनाप्तेरित्याह—भङ्गश्लेष इति। यथाऽयोध्यापुरी अजरामयो रता प्रिया तथाऽजरामरभावः कस्य न प्रिय इति भावः। अत्र यस्य पदस्यैकोऽर्थ एव नापरोऽपि तु समुदायेनार्थद्वयं प्रत्याय्यते इति स भङ्गश्लेष इत्याशयः ॥ ६३ ॥

**अन्वयः**— चेत् पदस्तोमस्य एव पृथगर्थता ( तदा ) भङ्गश्लेषः ( भवति ) ( उदाहरति ) अयोध्यापुरी इव कस्य अजरामरता न प्रिया ?

**व्याख्या**—पदश्लेषस्य द्वितीयभेदमाह—भङ्गश्लेष इति। चेत्=यदि पदानां स्तोमः समूहः पदस्तोमः तस्य पदस्तोमस्य=पदसमूहस्य एव पृथगर्थता=भिन्नार्थता तदा भङ्गश्लेषः। उदाहरति— अजरेति। अयोध्यापुरी इव=साकेतनाम्नी नगरी इव। अजरश्चासावमरश्चेति अजरामरौ, तयोर्भावः अजरामरता। अयोध्यापक्षे अजश्च रामश्चेत्यजरामौ=रघुपुत्रदशरथपुत्रौ तयोः रता:=अनुरक्ता। कस्य=पुरुषस्य न प्रिया=इष्टा। अपितु सर्वेषां प्रिया अस्ति। अत्र अजरामरतेति पदस्तोमस्यैव भिन्नार्थत्वात् भङ्गश्लेषः। भङ्गश्लेषे जतुकाष्ठन्यायेन श्लेषो भवति। यथा काष्ठजतुनी मिलिते एक रूपे दृश्येते। भेदे च सति पृथक्त्वमापद्यते तथैवात्र मिलिते पदे एकरूपे स्तः।

**हिन्दी**—पदश्लेष वहाँ होता है जहाँ पदसमूह के अनेक अर्थ हों। अजरामरता इत्यादि श्लोकार्ध इसका उदाहरण है। अयोध्यापुरी की तरह अजरता और अमरता किसको प्रिय नहीं है। अयोध्यापुरी पक्ष में अजरामरता पद का रघुपुत्र अज और रामचन्द्र में अनुरक्त यह अर्थ होता है। यहाँ पर 'अजरामरता' यह पदसमूह दो अर्थ का है इसलिए यहाँ भङ्गश्लेष हुआ ॥ ६३ ॥

**अर्थश्लेषोऽर्थमात्रस्य यद्यनेकार्थसंश्रयः।**
**कुटिलाः श्यामला दीर्घा कटाक्षाः कुन्तलाश्च ते ॥ ६४ ॥**

यत्र विशेष्यपदयोर्भिन्नयोरर्थयोर्विशेषणपदार्था अभिन्ना अनेकेऽन्विताः सोऽर्थश्लेषः। यथा कटाक्षकुन्तलयोः कुटिलत्वादय इत्याह—**अर्थश्लेष इति** ॥ ६४ ॥

**अन्वयः**—यदि अर्थमात्रस्य अनेकार्थसंश्रयः ( तदा ) अर्थश्लेषः स्यात्। ( उदाहरति ) कुटिलेति। ते कुन्तलाः कटाक्षाश्च कुटिला श्यामला दीर्घाश्च ( सन्ति )।

**व्याख्या**— अर्थश्लेषं व्याचष्टे— अर्थश्लेष इति। यदि चेत् अर्थस्य=वाच्यार्थमात्रस्य अनेकार्थानां भावः अनेकार्थानां=अनेकपदार्थानां संश्रयः=अन्वयः स्यात् तदा अर्थश्लेषः भवति। उदाहरति—कुटिलेति। ते=तव कुन्तलाः=केशाः कटाक्षाश्च=अपाङ्गदृष्टयश्च। कुटिलाः = भङ्गिमायुक्ताः श्यामलाः=कृष्णवर्णाः

दीर्घाः=लम्बायमानाश्च सन्ति। अत्र कटाक्षानां कुटिलताद्यन्यत् कुन्तलस्य च कुटिलताद्यन्यत् इत्यनेकविधस्य कुटिलतादिरूपस्यार्थस्य कटाक्षकुन्तलरूपानेक-पदार्थाभिन्नतया अर्थश्लेषः।

हिन्दी—जहाँ केवल अर्थ का ही अनेक वस्तुओं के साथ सम्बन्ध बताया जाय वहाँ अर्थश्लेष होता है। पर्यायवाचक शब्द बदलने पर भी श्लेषालंकार न हटे वहाँ अर्थश्लेष होता है। कुटिला यह अर्थश्लेष का उदाहरण है। हे प्रिये! तुम्हारे कटाक्ष और केश दोनों ही कुटिल, श्यामल और लम्बे हैं। कटाक्ष के कुटिलता आदि धर्म, केश के कुटिलता आदि धर्म से भिन्न प्रकार के होते हैं। यहाँ कुटिलता अर्थ का केश आदि अनेक पदार्थों के साथ सम्बन्ध वर्णन किया गया है। इसलिये यहाँ अर्थश्लेष हुआ ॥ ६४ ॥

अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुतानुगा।
कार्यकारणसामान्यविशेषादेरसौ मता ॥ ६५ ॥

यत्राऽप्रस्तुतप्रशंसाऽप्रस्तुतकथा प्रस्तुतानुगा प्रस्तुते पर्यवस्यति साऽप्रस्तुतप्रशंसा स्यात्। यथा-कमलैरित्यादि। अत्र प्रस्तुतानां धनवतां कथया प्रस्तुतकमलकथेत्याह—अप्रस्तुतप्रशंसेति ॥ ६५ ॥

अन्वयः—यत्र प्रस्तुतानुगा अप्रस्तुतप्रशंसा स्यात् तत्र अप्रस्तुतप्रशंसा कार्य-कारणसामान्यविशेषात् असौ मता।

व्याख्या—अप्रस्तुतप्रशंसां व्याचष्टे—अप्रस्तुतेति। यत्र प्रस्तुतमनुगच्छतीति प्रस्तुतानुगा=प्रस्तुतवृत्तानुसारिणी अप्रस्तुतस्य अप्रकृतपदार्थस्य प्रशंसा=कथनमिति अप्रस्तुतप्रशंसानामालङ्कारो भवति। यत्राप्रस्तुतवृत्तान्तवर्णनं प्रस्तुतवृत्तान्तपर्य-वसायी तत्रायमलङ्कारः। कार्यं च कारणं च सामान्यं च विशेषश्च कार्यकारण-सामान्यविशेषा ते आदौ यस्य तथाभूतात् सम्बन्धात् असौ=अप्रस्तुतप्रशंसा मता= इष्टा। तथा चेयं पञ्चविधाः—कार्यप्रतीतिरूपा, कारणप्रतीतिरूपा, सामान्यप्रतीति-रूपा, विशेषप्रतीतिरूपा, सारूप्यप्रतीतिरूपा च।

हिन्दी—जहाँ अप्रस्तुत के वर्णन द्वारा प्रस्तुत का बोध कराया जाय वहाँ अप्रस्तुतप्रशंसा अलंकार होता है। यहाँ अप्रस्तुतार्थप्रतीति अभिधावृत्ति से और प्रस्तुतार्थप्रतीति व्यञ्जनावृत्ति से होती है। यह अप्रस्तुतप्रशंसा पाँच प्रकार की होती है। कार्यप्रतीतिरूपा, कारणप्रतीतिरूपा, सामान्यप्रतीतिरूपा, विशेषप्रतीति-रूपा और सारूप्यप्रतीतिरूपा ॥ ६५ ॥

कमलैः कमलावासैः किं किं नासादि सुन्दरम् ।
अप्यम्बुधेः परं पारं प्रयान्ति व्यवसायिनः ॥ ६६ ॥

एषा च कार्येऽप्रस्तुते कारणाऽभिधानं कारणे कार्याऽभिधानं विशेष-सामान्यस्य सामान्यविशेषस्यभिधानमिति रूपा । तत्र व्यवसायिनां किमपि न दुष्करमिति सामान्ये प्रस्तुते अप्यम्बुधेरिति विशेषस्याभिधानमित्याह-कार्येति ॥ ६६ ॥

अन्वयः—कमलावासैः कमलैः किं किं सुन्दरं न आसादि । व्यवसायिनः अम्बुधेः परं पारं प्रयान्ति ।

व्याख्या—अप्रस्तुतप्रशंसामुदाहरति—कमलैरिति । कमलायाः लक्ष्म्याः आवास-भूतैः=निवासभूतैः कमलैः=पद्मैः किं किं सुन्दर=रम्यं नासादि=न प्राप्तम् । किन्तु सर्वमेव सुन्दरं वस्तु प्राप्तम् । अत्राप्रस्तुतकमलसामान्यप्रशसया प्रस्तुतध्वनि-विशेषप्रशंसेति सामान्येन विशेषप्रतीतिरूपा अप्रस्तुतप्रशंसा विशेषेण सामान्य-प्रतीतिरूपामप्रस्तुतप्रशंसामुदाहरति—अप्यम्बुधेरिति । व्यवसायिनः=उद्योगिनः पुरुषाः अम्बुधेः=समुद्रस्य अपि परं पारं=परतीरं गच्छन्ति=प्रयान्ति । अत्रा-प्रस्तुताम्बुधिपरपारगमनरूपाप्रस्तुतविशेषेण व्यवसायिनः कृते किमपि कर्म दुष्करं नास्तीति सामान्यप्रतीतिरूपाऽप्रस्तुतप्रशंसा ।

हिन्दी—लक्ष्मी के आवास रूप कमलों ने क्या-क्या सौन्दर्य नहीं पाया अपितु सब कुछ प्राप्त कर लिया । करकमल, मुखकमल, नयनकमल आदि अनेक सुन्दरों का उपमान बन गया । इस कमल कथा से किसी प्रस्तुत धनी के वृत्तान्त का वर्णन है । तात्पर्य यह है कि धनिक ने धन के बल पर सब सुख-सामग्री प्राप्त कर ली । यहाँ अप्रस्तुत कमल सामान्य की कथा से प्रस्तुत धनीविशेष का वर्णन प्रतीत होता है । दूसरे उदाहरण में उद्योगी के लिए सभी कार्य सम्भव हैं । इस प्रस्तुत सामान्य अर्थ की पुष्टि उद्योगी पुरुष समुद्र के पार भी चला जाता है इस विशेष अर्थ का वर्णन करके किया गया है ॥ ६६ ॥

भवेदर्थान्तरन्यसोऽनुषक्तार्थान्तराभिधा ।
हनूमानब्धिमतरद् दुष्करं किं महात्मनाम् ॥ ६७ ॥

अर्थान्तरन्यासमाह—भवेदिति । यत्र मुख्येनार्थेनानुषक्तं सहितमर्था-न्तरमभिधीयत इत्यर्थः । उदाहरणम्--हनूमानिति । अत्र दुष्करं किं महा-

त्मनामिति मुख्योऽर्थस्तत्सहितं हनुमानित्याद्यभिहितम्। यद्वाऽनुषक्तं मुख्यार्थस्य साधकं दुष्करं किं महात्मनामित्यस्य हनुमानित्यनेन साधनात् ॥ ६७ ॥

**अन्वयः**—अनुषक्तान्तराभिधा अर्थान्तरन्यासः भवेत्। ( उदाहरणं यथा ) हनूमान् अब्धिम् अतरत् महात्मनां किं दुष्करम्।

**व्याख्या** – अर्थान्तरन्यासं व्याचष्टे—भवेदिति। अन्यः अर्थः अर्थान्तरं अनुषक्तम्=सम्बद्धं च तदर्थान्तरमनुषक्तार्थान्तरम् तस्य अभिधा=कथनम् यत्र सा अनुषक्तान्तराभिधा। यत्र स्यात्तत्र अर्थान्तरन्यासः स्यात्। अन्योऽर्थोऽर्थान्तरं तस्य न्यासः अर्थान्तरन्यासः मुख्यार्थसम्बद्धं यत्रार्थान्तरं स्यात्तत्रायमलङ्कारो भवति। उदाहरति—हनूमानिति। हनूमान् = अञ्जनापुत्रः अब्धिम्=समुद्रम् अतरत् = तीर्णवान्। महात्मनाम्=लोकोत्तरसामर्थ्यवतां किं दुष्करमसाध्यमस्ति। किमपि नेत्यर्थः। अत्र महात्मनां किमपि असाध्यं नास्तीति सामान्येन हनूमत्कर्तृकविशेषार्थस्य समर्थनात् अर्थान्तरन्यासः।

**हिन्दी**—जहाँ मुख्य अर्थ से सम्बद्ध अर्थान्तर का कथन हो वहाँ अर्थान्तरन्यास अलंकार होता है। जैसे हनुमान् समुद्र को पार कर गये। ठीक ही है। महात्माओं के लिए कौन-सा कार्य दुष्कर है? यहाँ पर महात्माओं के लिए क्या दुष्कर है इस सामान्य अर्थ से विशेष हनुमान्कर्तृक समुद्र के तरण का समर्थन होता है इसलिए यहाँ अर्थान्तरन्यास अलंकार हुआ ॥ ६७ ॥

**यस्मिन्विशेषसामान्यविशेषाः स विकस्वरः।**
**स न जिग्ये महान्तो हि दुर्धर्षाः क्ष्माधरा इव ॥ ६८ ॥**

यस्मिन्प्रथमतो विशेषः पश्चात्सामान्यं ततो विशेषः स विकस्वरालङ्कारः। यथा – स न जिग्ये इत्यादौ। अत्र केनचित्सः कश्चिदतिक्रान्तो न जिग्ये न जित इति विशेषः। महान्तो दुर्द्धर्षा इति सामान्यं क्ष्माधरा इति विशेषः ॥ ६८ ॥

**अन्वयः**—यस्मिन् विशेषसामान्यविशेषाः स विकस्वरः (भवति उदाहरति) स न जिग्ये महान्तः हि क्ष्माधरा इव दुर्धर्षाः भवन्ति।

**व्याख्या**—विकस्वरालङ्कारं व्याख्याति। यस्मिन्=वाक्ये। विशेषश्च सामान्यश्च विशेषश्च विशेषसामान्यविशेषाः=एवंरूपाः अर्थाः स्युः स विकस्वरालङ्कारः

भवति। विशेषार्थसमर्थनाय सामान्ये विन्यस्तेऽप्यपरितोषात् पुनर्विशेषार्थविन्यासे विकस्वरालङ्कारः भवति। मध्यवृत्तिसामान्यस्य पूर्वोत्तराभ्यां विशेषाभ्यां समर्थनाद्विकस्वरालङ्कारः उदाहरति—स न जिग्ये इति। परैराक्रान्तोऽपि सः=वीरः न जिग्ये = न पराजितः, हि = यतः महान्तः=महापुरुषाः क्षमाधराः=शैला इव यथा दुर्धर्षाः=दुराक्रमाः भवन्ति। यथा पर्वताः तथा महान्तोऽपि दुरभिभवाः भवन्ति। महापुरुषत्वादेव पर्वतादिवत्स न जित इति सर्ववाक्यार्थः। अत्र पूर्वविशेषार्थस्य ततः 'महान्तो दुर्धर्षाः' इति सामान्यार्थस्य पुनश्च क्षमाधरा इति विशेषार्थस्य च न्यसनात् विकस्वरालङ्कारः।

हिन्दी—जहाँ विशेषसामान्य विशेष अर्थ की उपस्थिति हो वहाँ विकस्वरालंकार होता है। तात्पर्य यह है कि जहाँ एक विशेष अर्थ का समर्थन सामान्य और विशेष अर्थ से किया जाय वहाँ यह अलंकार होता है। मध्य में रहने वाले सामान्य अर्थ का आगे-पीछे रहने वाले विशेष अर्थ से समर्थन होने के कारण इसे विकस्वर विशेष रूप से प्रकाशित अलंकार कहा गया है। जैसे—उस वीर को कोई जीत नहीं सका ठीक ही है। क्योंकि प्रभावशाली पुरुषों की हार नहीं होती जैसे—पर्वत लांघना कठिन होता है। यहाँ जिसको कोई जोत न सका इस विशेष अर्थ का 'महान्तः दुर्धर्षाः' और विशेष क्षमाधरा इससे समर्थन करने से यहाँ विकस्वरालंकार हुआ॥ ६८॥

**कार्याद्यैः प्रस्तुतैरुक्तैः पर्यायोक्तिं प्रचक्षते।**
**तृणान्यङ्कुरयामास विपक्षनृपसद्मसु॥ ६९॥**

प्रस्तुतैः कार्याद्यैर्यत्र प्रस्तुतमेव कारणाद्युच्यते तत्र पर्यायोक्तिः। यथा-तृणानीति। अत्र तृणेन कार्येण शत्रूणामुत्सादनं कारणमुच्यते। अत्रोभयोः प्रस्तुतत्वात् नाप्रस्तुतप्रशंसालङ्कारः॥ ६९॥

अन्वयः—प्रस्तुतैः कार्याद्यैः उक्ते पर्यायोक्तिः प्रचक्षते। (सः) विपक्षसद्मसु तृणानि अङ्कुरयामास।

व्याख्या—पर्यायोक्त्यलङ्कारं व्याख्याति—कार्याद्यैरिति। प्रस्तुतैः=वर्णनीयैः कार्याद्यैः=प्रस्तुते कारणादावुक्ते=अभिहिते सति बुधाः पर्यायोक्तिमलङ्कारं प्रचक्षते। उदाहरणम्— तृणानीति। यः राजा विपक्षाणाम् = शत्रूणाम्, सद्मसु = गृहेषु तृणानि=घासानि अङ्कुरयामास=रोहयामास। अत्र शत्रुगृहेषु तृणप्ररोहणरूप-

कार्येण शत्रुमारणरूपं कारणं प्रतीयते इति पर्यायोक्तिः। शून्यगृहेष्वेव परिष्कारा-भावे तृणान्युत्पद्यन्ते। अत्रैकस्यैव प्रकारभेदेन वाच्यत्वं व्यङ्ग्यत्वं चास्ति। कार्यरूपेण वाच्यत्वम् कारणरूपेण व्यङ्ग्यत्वम्। अस्य बहवो भेदाः अन्यत्रोक्तास्तेष्वयं भेदः कार्येण कारणप्रतीतिरूपः। अन्ये च भेदाः अन्यतो द्रष्टव्याः।

हिन्दी -- जहाँ प्रस्तुत कार्यादि से प्रस्तुत कारणादि की प्रतीति होती है वहाँ पर्यायोक्ति अलंकार होता है। जैसे---हे राजन्! आपने अपने शत्रु राजाओं के घर पर तृण जमा दिया। यहाँ प्रस्तुत घर पर तृणाङ्कुरण से प्रस्तुत कारण शत्रुओं का निःशेष रूप मारा जाना व्यञ्जना से बोधित होता है। इसलिए यहाँ पर्यायोक्ति अलंकार हुआ। यहाँ व्यङ्ग्य प्रस्तुत को प्रकारान्तर से वाच्य बना दिया जाता है। यहाँ वैरी के घर पर तृण का जमाना रूप कार्य अर्थ को अभिधा से कहकर शत्रुओं का भाग जाना या मारा जाना रूप कारण जो प्रस्तुत है वह व्यञ्जना से कहा गया ॥ ६९ ॥

उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः।
कस्ते विवेको नयसि स्वर्गं पातकिनोऽपि यत् ॥ ७० ॥

निन्दया स्तुतेः स्तुत्या वा निन्दाया उक्तिः व्याजस्तुतिः। एकत्र व्या-जेन स्तुतिः परत्र व्याजरूपा स्तुतिः। तत्राद्या क इत्यादौ। अत्र गङ्गायाः निन्दाव्याजेन स्तुतिः। अत्र निन्दा स्तुतिपर्यवसन्ना। द्वितीयायां स्तुति-र्निन्दापर्यवसन्ना। यथा--

खलाः किल कलौ काले केवलं न क्षतव्रताः।
ये मौनमुद्रां मुञ्चन्ति न कदाचित्परस्तवे ॥

इत्याह--उक्तिरिति ॥ ७० ॥

**अन्वयः**—निन्दास्तुतिभ्यां स्तुतिनिन्दयोः उक्तिः व्याजस्तुति अलङ्कारः। उदा-हरणम्—ते कः विवेकः ( यत् ) पातकिनः अपि स्वर्गं नयसि।

**व्याख्या**—व्याजस्तुतिं निरूपयति—उक्तीति। निन्दा च स्तुतिश्च निन्दा-स्तुती ताभ्यां = अवज्ञाप्रशंसाभ्याम्। स्तुतिश्च निन्दा चेति स्तुतिनिन्दे तयोः स्तुति-निन्दयोः = प्रशंसावज्ञयोः। उक्तिः = कथनम् व्याजोक्तिः = तन्नामालङ्कारः। उदाहरति—कस्त इति—हे गङ्गे! कोऽयं ते = तव विवेकः = विचारः। यत् पापिनः = किल्विषकारिणः। अपि स्वर्गं = देवलोकम्। नयसि = प्रापयसि।

पापिनोऽपि यदि त्वयि स्नात्वा स्वर्गं गच्छन्ति तर्हि कः सुकृतं स्वर्गलोभेन करिष्यं
त्यक्षति वा पापं नरकभयेन । अत्र कस्ते विवेकः अर्थाद् विचारो नास्तीति निन्द
व्याजेन तस्य प्रभावातिशयवर्णनात् प्रशंसा । यत्र निन्दया स्तुतिस्तत्र व्याजेन स्तु
यत्र च स्तुत्या निन्दा तत्र व्याजरूपास्तुतिः । इत्युभयत्र व्याजस्तुत्यर्थो घटते ।

हिन्दी—जहाँ निन्दा और प्रशंसा से क्रमशः प्रशंसा और निन्दा का व्यङ्ग
से बोध हो वहाँ व्याजस्तुति नामक अलंकार होता है। जैसे—हे गङ्गे ! तुम
जरा भी विचार नहीं है। तुम पापियों को स्वर्ग में ले जाती हो। यदि ऐसा
करोगी तो कौन स्वर्ग के लोभ से पुण्य करेगा और कौन नरक के भय से पा
को न करेगा। इस तरह सुनने में गंगा की निन्दा ज्ञात होती है परन्तु इ
गंगा का विलक्षण प्रभाव व्यक्त होता है। यहाँ पर निन्दा से प्रशंसा ज्ञात होने
कारण व्याजस्तुति अलंकार हुआ। व्याजेन=निन्दाव्याजेन स्तुतिः प्रशंसा।
प्रशंसा से निन्दा जानी जाती है वहाँ व्याज रूपी स्तुति यह अर्थ होता है।
लिए दोनों जगहों पर व्याजस्तुति का अर्थ घट जाता है ॥ ७० ॥

**आक्षेपस्तु प्रयुक्तस्य प्रतिषेधो विचारणात् ।**
**चन्द्र संदर्शयात्मानमथवास्ति प्रियामुखम् ॥ ७१ ॥**

प्रयुक्तस्य यो विचारेण प्रतिषेधः स आक्षेपः । यथा—चन्द्रेत्यादौ ।
प्रथमतश्चन्द्रदर्शनविधिः पश्चात्प्रियामुखे जयिनि सति नोचित
प्रतिषेध इत्याह—आक्षेप इति ॥ ७१ ॥

**अन्वयः**—प्रयुक्तस्य विचारणात् प्रतिषेधः तु आक्षेपः ( भवति, उदाहर
चन्द्र आत्मानं दर्शय अथवा प्रियामुखम् अस्ति ( अलं तव दर्शनेन ) ।

**व्याख्या**—आक्षेपालङ्कारं व्याख्याति—आक्षेप इति । प्रयुक्तस्य=उपमान
कृतप्रयोगस्य वस्तुनो विचारणात् प्रतिषेधः=निषेधः । आक्षेपः एतन्नामकः
ङ्कारो भवति । उपमेयस्योह्लादकत्वाद्युपमानकार्यनिष्पादकत्वेनोपमानवैयर्थ्यंमा
इति भावः । उदाहरति—चन्द्रेति । हे चन्द्र !=शशिन् ! त्वं आत्मनं =
बिम्बम् दर्शय=प्रदर्शय । अथवा किं तव दर्शनेन । प्रियामुखम्=कामिनीव
मस्त्येव । त्वया यत्कार्यं सम्पाद्यते तत् कामिनीवदनेनैव सम्पत्स्यते । तव दर्श
व्यर्थम् । अत्रोपमानत्वेन सङ्गतस्य चन्द्रस्य प्रियामुखास्तित्वविचारेणानर्थक्यंक
मिति लक्षणसमन्वयः ।

हिन्दी—जहाँ पहले उपमान का प्रयोग किया जाय पश्चात् विचार से उसका निषेध किया जाय वहाँ आक्षेप अलंकार होता है। अर्थात् उपमान का कार्य उपमेय से हो जायगा ऐसा विचार कर उपमेय की व्यर्थता बताने को आक्षेप कहते हैं। जैसे—हे चन्द्र! तुम अपने को दिखाओ अथवा रहने दो। प्रियतमा का मुख तो है ही। तुम्हारी क्या आवश्यकता? चन्द्र के दर्शन से अधिक सुख तो प्रियतमा के मुख के दर्शन से ही हो जाता है। इसलिए चन्द्रमा का दर्शन व्यर्थ है। यहाँ पहले चन्द्र के दर्शन की प्रार्थना है पुनः प्रिया के मुख का विचार कर उसका निषेध कर दिया गया है इसलिए यहाँ आक्षेपालंकार हुआ।। ७१ ।।

गूढाक्षेपो विधौ व्यक्ते निषेधे चास्फुटे सति।
हर सीतां सुखं, किं तु चिन्तयान्तकढौकनम् ।। ७२ ।।

यत्र विधिः प्रकटः निषेधस्त्वस्फुटः स गूढाक्षेपः। यथा—सीताहरणोन्मुखं रावणं प्रति मारीचोक्तिः। अत्र हरेत्यादिना विधेः स्फुटत्वात् चिन्तयेत्यादिना मृत्युभयप्रदर्शनेन निषेधस्याऽस्फुटत्वादित्याह—गूढेति ।। ७२ ।।

अन्वयः—विधौ व्यक्ते निषेधे च अस्फुटे सति गूढाक्षेपः स्यात् (हे रावण) सीतां सुखं हर किन्तु अन्तकढौकनम् चिन्तय।

व्याख्या—गूढाक्षेपमाह—गूढाक्षेप इति—विधौ=विधाने। व्यक्ते=स्फुटे, प्रतिषेधे=निषेधे च अस्फुटे = अप्रकटे सति गूढाक्षेपो भवति। गूढाक्षेप नामालङ्कारः भवति। उदाहरति—हरेति। रावणं प्रति मारीचोक्तिरियम्। हे रावण, त्वं सुखं यथा स्यात्तथा सीताम् = जानकीम् हर=चोरय। किन्तु अन्तकस्य = यमस्य तत्समीपे ढौकनम् = गमनं चिन्तय = विचारय। सीताहरणे तव मृत्युः निश्चितः।

अत्र सीतां हरेति विधिः स्फुटः किन्त्वित्यादिना मृत्युभयवर्णनेन निषेधः अस्फुट इति लक्षणसमन्वयः।

हिन्दी—गूढाक्षेप वहाँ होता है जहाँ विधि स्पष्ट हो और निषेध अस्पष्ट हो। इसका उदाहरण हरेत्यादिपद्योत्तरार्ध है। मारीच की उक्ति है—हे रावण! सीता को सुखपूर्वक चुरा लो किन्तु यमराज के यहाँ जाने को सोचो। सीता के चुराने से तुम्हारी मृत्यु निश्चित है। यहाँ पर सीता के चुराने की विधि स्पष्ट रूप से

कहा गया है। निषेध स्पष्ट रूप से नहीं कहा गया है। इसलिए यहाँ गूढा अलंकार हुआ ॥ ७२ ॥

विरोधोऽनुपपत्तिश्चेद् गुणद्रव्यक्रियादिषु।
अमन्दचन्दनस्यन्दः स्वच्छन्दं दन्दहीति माम् ॥ ७३ ॥

यत्र द्रव्यगुणक्रियादीनां विरोधस्तत्र विरोधः। यथा--चन्दनदाहक इत्याह—विरोध इति ॥ ७३ ॥

अन्वयः---गुणद्रव्यक्रियादिषु अनुपपत्तिः चेत् ( तदा ) विरोधः ( स्यात् ) ( उदाहरति ) अमन्दचन्दनस्पन्दः स्वच्छन्दं मां दंदहीति।

व्याख्या—विरोधालङ्कारं व्याचष्टे—विरोध इति। गुणं च द्रव्यं च क्रिया चेति गुणद्रव्यक्रियाः तदादिषु। असंगतिः = विरोधः चेत् तदा विरोधालङ्कारः भवति। आदिना जातेरपि ग्रहणं तथा च गुणक्रियाद्रव्यजातीनां मिथोऽनुपपत्ति तत्रायमलङ्कारः। उदाहरति—अमन्देति। चन्दनस्य = पाटीरस्य स्पन्दः चन्दनस्पन्दः = चन्दनवृक्षद्रवः अमन्दः = बहलश्चासौ चन्दनस्पन्दः अमन्दचन्दनस्पन्दः स्वच्छन्दम् = यथेच्छम् मां विरहिणीम् दंदहीति = अतिशयेन दहति। अशीतप्रकृतेश्चन्दनस्य दाहकत्वमापाततः विरुद्धं प्रतीयते पर्यवसाने विरहिण्याः उक्तिरियमिति विचारे विरहावस्थायां शीतप्रकृतेरपि सन्तापकतया अविरोध एव।

हिन्दी—गुण-द्रव्य-क्रिया आदि का परस्पर विरोध आपाततः प्रतीत हो, पर्य्यवसान अविरोध हो वहाँ विरोध नामक अलंकार होता है। वस्तुतः विरोध होने के कारण इसको विरोधाभास कहते हैं। उदाहरण—जैसे चन्दन का द्रव मुझे स्वच्छन्द रूप से जलाता है, यहाँ पर शीत प्रकृति चन्दन का जलाना अपाततः विरुद्ध रूप से जाना जाता है। पर यह विरहिणी की उक्ति है ऐसा लेने पर अविरोध हो जाता है क्योंकि विरहावस्था में शीत पदार्थ दाहक है ॥ ७३ ॥

श्लेषादिभूर्विरोधश्चेद्विरोधाभासता मता।
अप्यन्धकारिणाऽनेन जगदेतत्प्रकाशते ॥ ७४ ॥

यत्र श्लेषकृतो विरोधस्तत्र विरोधाभासः। यथाऽपीत्यादौ। अ ऽन्धकस्यारिरिति विरोधाभावेऽप्यन्धकारत्वानित्यर्थविरोधस्य स्फुट तात्पर्यविषयीभूतार्थभिन्नस्य विरुद्धस्यार्थस्य प्रतीयमानत्वादन्धक विशिष्टेन प्रकाशासम्भवादित्याह—श्लेषेति ॥ ७४ ॥

**अन्वयः**—श्लेषादिभिः विरोधः चेत् ( तदा ) विरोधाभासता मता । ( उदाहृति ) अन्धकारिणा अपि त्वया एतत् जगत् प्रकाशते ।

**व्याख्या**—विरोधाभासालङ्कारमाह—श्लेषादिना । द्व्यर्थकशब्दविन्यासादिना भवतीति श्लेषादिशब्दभूः । द्व्यर्थकशब्दस्थापनजन्यः । विरोधः=अनुपपत्तिः । तदा विरोधाभासता=विरोधाभासालङ्कारत्वं भवति । विरोधाभास नामा अलंकारो भवतीत्यर्थः । उदाहरति—अप्यन्धकेति । अन्धं करोतीत्यन्धकारी तेन अन्धकारिणा=अन्धकारवता अपि अनेन शंकरेण इदं जगत्=संसारः प्रकाशते = दीप्यते । अत्र यः स्वयं अन्धकारवान् स कथं जगत् प्रकाशयति इति श्रवणमात्रेण विरोधो भासते । पर्य्यवसाने तु अन्धकस्य=अन्धकनाम्नो दैत्यस्य अरिणेत्यर्थकरणेनाविरोधः । इत्यत्र विरोधस्याभासमात्रत्वात् विरोधाभासः अलङ्कारः ।

**हिन्दी**—जहाँ श्लेषादि अलङ्कार द्वारा विरोध का आभास हो वहाँ विरोधाभास नामक अलंकार होता है । उदाहरण—जैसे अन्धकार फैलानेवाले शंकर से यह जगत् प्रकाशित है । यहाँ स्वयं जो अन्धकार को फैलाता है वह जगत् को कैसे प्रकाशित कर सकता है । यह विरुद्ध अर्थ श्रवण मात्र से प्रतीत होता है किन्तु अन्धक दैत्य का शत्रु इस अर्थ के जान लेने पर विरोध नहीं रह जाता । अन्धकार के मारनेवाले भगवान् शंकर से यह जगत् प्रकाशित हो रहा है यह यथार्थ अर्थ है ॥ ७४ ॥

असंभवोऽर्थनिष्पत्तावसंभाव्यत्ववर्णनम् ।
को वेद गोपशिशुकः शैलमुत्पाटयिष्यति ॥ ७५ ॥

एवमादिपदग्राह्यो यत्रार्थे निष्पन्ने इदमसम्भावितमनेन कृतमिति प्रभृति वर्ण्यते सोऽसम्भवः । यथा—अल्पवयसा नारायणेन गोवर्द्धने करेणोद्धृते को वेदेत्यादिर्गोपानामुक्तिरित्याह—असम्भव इति ॥ ७५ ॥

**अन्वयः**—अर्थनिष्पत्तौ असम्भाव्यत्ववर्णनम् असम्भवः ( भवति उदाहरति ) को वेद गोपशिशुकः शैलमुत्पाटयिष्यति ।

**व्याख्या**—असम्भवालंकारं व्याचष्टे—असम्भव इति । अर्थस्य=भूतार्थस्य निष्पत्तौ=सिद्धावपि असम्भाव्यत्वस्य वर्णनमसम्भाव्यवर्णनम्=असम्भवतया कथनम् । असम्भवः एतन्नामा अलंकारः भवति । उदाहरति—को वेदेति । शिशुरेव शिशुकः गोपस्य शिशुकः गोपशिशुकः=गोपबालकः शैलम्=गोवर्द्धनाख्यम् पर्वतं

उत्पाटयिष्यति=उद्धरिष्यति इति को वेद=कः जानाति। भगवता श्रीकृष्णे गोवर्धनाख्यो गिरिरुद्धरत इति भूतार्थस्योत्पत्तेः। गोपबालकस्याल्पवयसः पर्वतो द्धारणाख्यं महत् कार्यं कोऽपि न विश्वसिति। इत्यादिनासम्भाव्यत्ववर्णना असम्भवालंकारः।

**हिन्दी**—कार्यसिद्धि हो जाने पर भी जहाँ असम्भवत्व का वर्णन किया जा वहाँ असम्भव अलंकार होता है। उदाहरण—जैसे गोप का बालक पहाड़ उखाड़ लेगा ऐसा भला किसका विश्वास हो सकता है। यहाँ भगवान् कृष्ण द्वा गोवर्धन पर्वत का उखाड़नारूप महान् कार्य निष्पन्न हो जाने पर भी असम्भव से वर्णन किया गया है। इसलिये यहाँ असम्भव अलंकार हुआ ॥ ७५ ॥

**विभावना विनापि स्यात्कारणं कार्यजन्म चेत्।**
**पश्य लाक्षारसासिक्तं रक्तं त्वच्चरणद्वयम् ॥ ७६ ॥**

यत्र कारणं विना कार्यनिष्पत्तिर्वर्ण्यते सा विभावना। यथापश्यादौ। अत्र लाक्षायोगकारणाभावेऽपि चरणयो रक्तताकार्यवर्णना त्याह—विभावनेति रसासिक्तम् ॥ ७६ ॥

**अन्वयः**—चेत् कारणं विना अपि कार्यजन्म स्यात् (तदा) विभावना (भव उदाहरति) लाक्षारसासिक्तम् त्वच्चरणद्वयं रक्तं पश्य।

**व्याख्या**—विभावनालंकारमाह—विभावनेति। चेत्=यदि कारणम्= विना=ऋते अपि कार्यस्य=फलस्य जन्म=उत्पत्तिः स्यात्=भवेत् विभावना अलंकारो भवेत्। उदाहरति—पश्येति। लाक्षारसेन=अलक्तकर असिक्तम्=अलिप्तम् अपि त्वच्चरणद्वयं=तव चरणयोर्युग्मं पादयुगलम्। रक्तम् अरुणम्। पश्य=विलोकय। चरणयुगलस्य रक्ततासम्पादनाय लाक्षारसं कारणं तद्विनापि रक्ततावर्णनात् अत्र विभावनालंकारः।

**हिन्दी**—कारण के बिना कार्य की उत्पत्ति होना विभावना अलंकार उदाहरण—जैसे तुम्हारे दोनों चरण लाक्षारस के सेक के बिना ही रक्त (ला हैं, देखो। पैर आलता लगाने पर ही लाल होता है। यहाँ पर उसके बिना रक्तता का वर्णन किया गया है इसलिए विभावना अलंकार हुआ ॥ ७६ ॥

**विशेषोक्तिरनुत्पत्तिः कार्यस्य सति कारणे।**
**नमन्तमपि धीमन्तं न लङ्घयति कश्चन ॥ ७७ ॥**

कारणे सति कार्यानुत्पत्तिर्विशेषोक्तिः। यथा—नमन्तमित्यादौ। नतो हि लङ्घयितुं शक्यते खर्वत्वात्। नतत्वरूपे कारणे सत्यपि लङ्घन-रूपकार्याभाव इत्याह—विशेषेति ॥ ७७ ॥

अन्वयः—कारणे सति कार्यस्य अनुत्पत्तिः विशेषोक्तिः ( भवति उदाहरति ) नमन्तमपि धीमन्तं कश्चन न लंघयति।

व्याख्या –विशेषोक्त्यलंकारं ब्रूते—विशेषोक्तिरिति। कारणे=हेतौ सत्यपि कार्यस्य=फलस्य अनुत्पत्तिः=अनुद्भवः विशेषोक्तिः अलंकारः। कारणे सति कार्यमवश्य भवति लोके, इह तु तद्विपरीतमुक्तलोभात् विशेषोक्तिः। उदाहरति—नमन्तमपीति। नमन्तमपि=विनीतमपि धीमन्तम्=बुद्धिमन्तम्। कश्चन=कोऽपि न लंघयति=नातिक्रामति नाभिभवतीत्यर्थः। अत्र नमनरूपकारणे सत्यपि लंघन-रूपकार्यस्यावदुक्तम्। निम्नवस्तुलंघयितुं शक्यं तथापि लंघनाभावः। विरोधपरि-हारस्त्वत्र स्वाभाविकनियमस्यात्र नम्रत्वेन वर्णनात्।

हिन्दी—जहाँ कारण के रहने पर भी कार्य की अनुत्पत्ति का वर्णन हो वहाँ विशेषोक्ति अलंकार होता है। उदाहरण—जैसे झुकते हुए सज्जन को कोई नहीं लांघ सकता—झुकना लंघन का कारण है। झुके को लांघा जा सकता है। तथापि न लांघ सकने का वर्णन किया गया है। इसलिए यहाँ विशेषोक्ति अलंकार हुआ। समाधान यह है कि यहाँ स्वाभाविक विनय को नम्रता पद से कहा गया है न कि नीचे की तरफ झुकना ॥ ७७ ॥

आख्याते भिन्नदेशत्वे कार्यहेत्वोरसंगतिः।
त्वद्भक्तानां नमत्यङ्गं भङ्गमेति भवक्लमः ॥ ७८ ॥

यत्र कार्यहेत्वोर्वैयधिकरण्यं वर्ण्यते तत्राऽसङ्गतिः। यथा—त्वदित्यादौ। अत्र नमनस्य कारणस्य भक्ताङ्गे वर्णनात्कार्यस्य भङ्गस्य भवक्लमे वर्णनादित्याह—आख्यातेति।

यत्र भिन्नो देशो न ख्यातस्तत्रैव वैयधिकरण्येऽसङ्गतिः। यत्र तु ख्यातस्तत्र नाऽसङ्गतिः। यथा—

भ्रूचापवल्लीं सुमुखी यावन्नयति वक्रताम्।
तावत्कटाक्षविशिखैर्भिद्यते हृदयं मम ॥

इत्यत्र वक्रतारूपस्य कारणस्य धनुर्वल्ल्यां भेदस्य च कार्यस्य भेद्य एव दृष्टत्वेन वैयधिकरण्यस्य ख्यातत्वान्नासङ्गतिरिति भावः ॥ ७८ ॥

**अन्वयः**—कार्यहेत्वोः भिन्नदेशत्वे आख्याते असङ्गतिरलङ्कारः ( भवति उदाहरति ) त्वद् भक्तानाम् अङ्गं नमति भवक्लमः भङ्गमेति ।

**व्याख्या**—असङ्गतिमाह—आख्यात इति । कार्यञ्च हेतुश्चेति कार्यहेतू तयोः कार्यहेत्वोः=फलकारणयोः । भिन्नौ देशौ ययोस्तौ भिन्नदेशौ तयोर्भावः तत्व तस्मिन् भिन्नदेशत्वे=पृथक् स्थानत्वे । वर्णिते सति असङ्गतिरलङ्कारः भवति उदाहरति—त्वद्भक्तानामिति । हे भगवन् ! तव भक्तानां त्वद्भक्तानां=तव सेव कानाम् अङ्गानि=शरीराणि नमन्ति=नम्रो भवन्ति । भवस्य क्लमः=संसार कष्टम् भङ्गं=विनाशं एति=याति । अत्र नमनरूपकारणं भगवताङ्गनिष्ठं भङ्गश्च भवक्लमनिष्ठ इति हेतुकारणयोर्भिन्नदेशत्वात् असङ्गतिरलङ्कारः । ईशवत्या संसार दुःखनिवृत्तिरिति विरोधपरिहारः ।

**हिन्दी**—असङ्गति अलंकार वहाँ होता है, जहाँ कारण कहीं अन्य जग होता हो और कार्य कहीं अन्य जगह । जैसे—भगवद्भक्तों के शरीर झुकते संसार के दुःख का नाश होता है । जो झुकता है वह टूटता है । यही यहाँ शरी झुकता है, भवक्लम ( संसार-दुःख ) हटता है । कारण शरीर में और छेद भव क्लेम में । इसलिए कारण और कार्य की भिन्नदेशता होने के कारण असङ्ग अलंकार हुआ । भगवान् के भक्ति से संसार के दुःखों का नाश होता है इस अर्थ विरोध का परिहार होता है । 'दृग उरझत टूटत कुटुम, जुड़त चतुर संग प्रीति परत गाँठ दुर्जन हिये, दया नयो यह रीति ॥' इस अलंकार का बिहारी कवि यह दोहा उत्तम उदाहरण है ॥ ७८ ॥

**विषमं यद्यनौचित्यादनेकान्वयकल्पनम् ।**
**क्वातितीव्रविषाः सर्पाः क्वासौ चन्दनभूरुहः ॥ ७९ ॥**

अनुचितयोरन्वयवर्णनं विषमम् । यथा—चन्दनभुजगयोरित्याह—**विषममिति** ॥ ७९ ॥

**अन्वयः**—यदि अनौचित्यात् अनेकान्वयकल्पनम् ( तदा ) विषमम् ( भवति उदाहरति ) अतितीव्रविशाः सर्पाः क्व असौ चन्दनभूरुहः क्व ।

**व्याख्या**—विषमालङ्कारं व्याचष्टे—विषममिति । यदि=चेत् अनौचित्या अनेकेषां पदार्थानां समन्वयः=सम्बन्धः तस्य कल्पनम्=वर्णनम् विषमं स्या अननुरूपानेकपदार्थसम्बन्धवर्णनं विषमालङ्कारः । उदाहरति—क्वातीति । अ

तीव्रम्=अत्युत्कटं विषम्=गरलम् येषां ते अतितीव्रविषाः सर्पाः=भुजङ्गाः क्व, चन्दनसमूहः=अतिशीतलसुरभिः चन्दनवृक्षः क्व ? अनयोः सम्बन्धः अनुचित इति भावः। अत्र चन्दनसर्पयोः मिथोऽननुरूपयोरनौचित्यं प्रदर्शयतमिति विषमालङ्कारः।

हिन्दी—अनुचितरूप से दो पदार्थों के सम्बन्ध का वर्णन करना विषमालंकार होता है। अतितीव्रविषाः सर्पाः यह इसका उदाहरण है। तीव्र विष को धारण करने वाले सर्प कहाँ और शीत एवं सुगन्धित चन्दन वृक्ष कहाँ ? यहाँ दोनों का अयोग्य सम्बन्ध होने के कारण विषम अलंकार हुआ ॥ ७९ ॥

समंमौचित्यतोऽनेकवस्तुसम्बन्धवर्णनम् ।
अनुरूपं कृतं सद्म हारेण कुचमण्डलम् ॥ ८० ॥

उचितत्ववर्णनात्समम्। यथा—हाराणां स्तनमण्डलेष्वित्याह—सममिति ॥ ८० ॥

अन्वयः—अनौचित्यतः अनेकवस्तुसम्बन्धवर्णनम् सममलंकारः। उदाहरति—हारेण अनुरूपं कुचमण्डलं सद्म कृतम्।

व्याख्या—सममलङ्कारं व्याख्याति—सममिति। अनौचित्यतः=अनुरूपत्वात् अनेकेषाम्=बहूनाम् अन्वयस्य=सम्बन्धस्य वर्णनम्=कथनम् सममलङ्कारः। उदाहरति—अनुरूपमिति। हारेण=मुक्ताहारेण कुचयुगलम्=स्तनमण्डलम् अनुरूपम्=समुचितम् सद्म=गृहम् कृतम्=विहितम्। अत्र कुचमण्डलहारयोः सम्बन्धस्य शोभाधायकतया समुचितसम्बन्धवर्णनात् समालङ्कारः।

हिन्दी—परस्पर योग्य पदार्थों के सम्बन्ध का वर्णन समालङ्कार होता है। अनुरूप इत्यादि श्लेकार्ध इसका उदाहरण है। मोतियों के हार ने अपने योग्य ही कामिनी के स्तनमण्डल को घर बनाया। इसलिये योग्य के साथ सम्बन्ध का वर्णन होने के कारण यहाँ समालंकार है ॥ ८० ॥

विचित्रं चेत्प्रयत्नः स्याद्विपरीतफलप्रदः।
नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं समुन्नतिम् ॥ ८१ ॥

यत्रैकक्रियानुकूलः प्रयत्नस्तद्विरुद्धां क्रियां सृजति तत्र विचित्रम्। यथा विनयादुन्नतिप्राप्तवित्याह—विचित्रमिति ॥ ८१ ॥

अन्वयः—चेत् विपरीतफलप्रदः प्रयत्नः स्यात् तदा विचित्रनामालङ्कारः

स्यात् । ( उदाहरति ) नमन्तीति । सन्तः त्रैलोक्यादपि समुन्नतिं लब्धुं नमन्ति ।

व्याख्या—विचित्रालङ्कारमाह—विचित्रमिति । विपरीतं=प्रतिकूलं फलं प्रददातीति विपरीतफलप्रदः = विरुद्धफलदः । प्रयत्नः = प्रयासः स्यात् तदा विचित्र नामालङ्कारो भवति । उदाहरणं यथा—नमन्तीति । सन्तः = सज्जनाः त्रैलोक्यात् = लोकत्रयात् अपि समुन्नतिम् = उत्कृष्टतां लब्धुं = प्राप्तुम् नम्रा भवन्ति । अत्र नमनरूपप्रयत्नः उन्नतिरूपफलप्रदायीति विचित्रालङ्कारः । 'प्रणमत्युन्नतिहेतोः जीवनहेतोः विमुञ्चति प्राणम् । दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ।। इदमुदाहरणमन्यत्र ।

हिन्दी—विरुद्ध फल देने वाले प्रयत्न को विचित्रालङ्कार कहते हैं । जैसे—सज्जन लोग तीनों लोकों से समुन्नत होने के लिए नम्र होते हैं । यहाँ नम्रता रूपी उद्योग से विपरीत उन्नति रूप फल होता है इसलिये विचित्रालंकार हुआ ॥ ८१ ॥

अधिकं बोध्यमाधाराादाधेयाधिकवर्णनम् ।
यया व्याप्तं जगत्तस्यां वाचि मान्ति न ते गुणाः ॥ ८२ ॥

यत्राऽऽधारस्याधिक्यमुपवर्ण्याऽऽधेयस्य तद्वर्ण्यते तत्राऽधिकम् । यथा जगद्व्याप्त्या वाचामाधाराणामाधिक्यमुक्त्वाऽऽधेयानां गुणानामाधिक्यवर्णनमित्याह—अधिकमिति ॥ ८२ ॥

अन्वयः—आधारात् आधेयाधिकवर्णनम् अधिकं बोध्यम् यया जगद् व्याप्तं तत्र वाचि तव गुणाः न मान्ति ।

व्याख्या—अधिकालङ्कारमाह—अधिकमिति । आधारात् = अधिकरणात् आधेयस्य = स्थाप्यपदार्थस्य अधिकम् = प्रचुरम् वर्णनम् अधिकालङ्कारः । आधारपृथुलतावर्णनपुरःधेयपदार्थाधिक्यवर्णनमधिकत्वम् । उदाहरति—यया = वाचा जगत् = विश्वं व्याप्तम् तस्यां वाचि = वचने हे भगवन् तव गुणाः न भान्ति भातुमशक्यते । वचोऽतीतास्ते गुणा इति । गुणाधारभूतायाः वाचः जगद्व्याप्यत्वाधिक्यवर्णनम् । पुनश्च गुणानां तस्मिन् महत्याधारे वाग्रूपे स्थानाभावत्वप्रतिपादनात् अधिकालङ्कारः ।

हिन्दी—जहाँ आधार से आधेय का अधिक वर्णन किया जाय वहाँ अधिकालंकार होता है । जैसे—जिस वाणी से सारा संसार व्याप्त है उसमें आपका

नहीं समाता, आपका गुण वागतीत है—'यतो वाचो निवर्तंना अप्राप्य मनसा सह।' ऐसा उपनिषदों में कहा गया है। यहाँ आधार वाणी को जगद् व्याप्त होने के कारण महान् बताकर वहाँ भी भगवद्गुणरूप आधेय का न अटना यह वर्णन होनें के कारण यहाँ अधिकालंकार हुआ ॥ ८२ ॥

**अन्योन्यं नाम यत्र स्यादुपकारः परस्परम्।**
**त्रियामा शशिना भाति शशी भाति त्रियामया ॥ ८३ ॥**

यत्र द्वयोः परस्परमुपकारत्वं तत्राऽन्योन्यम्। यथा—निशाशशिनोः परस्परशोभाऽऽधायकत्वमित्याह अन्योन्यमिति ॥ ८३ ॥

**अन्वयः**—यत्र परस्परम् उपकारः स्यात् तत्र अन्योन्यं नाम अलङ्कारः (भवति उदाहरति) त्रियामा शशिना भाति शशी त्रियामया भाति।

**व्याख्या**—अन्योन्यालङ्कारं व्याचष्टे—अन्योन्यमिति। यत्र = यस्मिन् स्थले परस्परम् = अन्योन्यम् उपकारः = उत्कर्षे साहाय्यम् स्यात् तत्र अन्योन्यालङ्कारः स्यात्। उदाहरति त्रियामेति। शशिना = चन्द्रमसा त्रियामा = रात्रिः भाति = शोभते शशी = चन्द्रः त्रियामया = निशया भाति = शोभते। अत्र त्रियामाशशिनोः परस्परोपकारजनकत्वात् अन्योन्यालङ्कारो भवति।

**हिन्दी**—जिस वाक्य में दो पदार्थों का परस्पर उपकार्योपकारक भाव का बोधन हो वहाँ अन्योन्यालंकार होता है। जैसे—रात चन्द्रमा से और चन्द्रमा रात से शोभित होते हैं। यहाँ रात और चन्द्रमा की परस्पर शोभा बढ़ाने वाला वर्णन किया गया है इसलिये यहाँ अन्योन्यालंकार हुआ ॥ ८३ ॥

**विशेषः ख्यातमाधारं विनाऽप्याधेयवर्णनम्।**
**गतेऽपि सूर्ये दीपस्थास्तमश्छिन्दन्ति तत्कराः ॥ ८४ ॥**

प्रसिद्धमाधारं विनाऽऽधेयवर्णनं विशेषः। यथा—विना भास्वन्तं तत्करवर्णन इत्याह विशेष इति ॥ ८४ ॥

**अन्वयः**—ख्यातमाधारं विनापि आधेयवर्णनम् विशेषः। (भवति उदाहरति) सूर्ये गते अपि दीपस्था तत्करा तमः छिन्दन्ति।

**व्याख्या**—विशेषालङ्कारमाह—विशेष इति। ख्यातम् = प्रसिद्धम् आधारम् = अधिकरणम् विना = ऋते अपि आधेयस्य = आश्रितस्य वर्णनम् = कथनम् विशेष-नामक अलंकारः भवति। सूर्ये = भास्करे गते = अस्ते अपि तस्य कराः तत्कराः =

तत्किरणा दीपस्था = दीपकावस्थिताः सन्तः तमः = अन्धकारम् छिन्दन्ति नाशयन्ति । सूर्यकिरणाधारं सूर्यं विना अपि तत् किरणावस्थानात् विशेषालंकारः पूर्व

हिन्दी—आधार के विना आधेय का वर्णन विशेषालंकार होता हैं। 'गतेऽस्य सूर्ये' इसका उदाहरण है। सूर्य के अस्त हो जाने पर भी उसके किरण दीपक में रह कर अन्धकार को नष्ट करते हैं। यहाँ सूर्यरूप आधार के विना भी उस किरण का वर्णन किया गया है इसलिये यहाँ विशेषालंकार हुआ ॥ ८४ ॥

स्याद् व्याघातोऽन्यथाकारि वस्त्वन्यक्रियमुच्यते ।
यैर्जगत्प्रीयते हन्ति तैरेव कुसुमायुधः ॥ ८५ ॥

यत्राऽन्यक्रियासमर्थमन्यक्रियासमर्थत्वेन वर्ण्यते तत्र क्रिययोर्विरो व्याघातः। यथा--प्रीतिसमर्थैः कुसुमैर्मारणवर्णनमित्याह--स्यादिति ॥ ८

अन्वयः—अन्यक्रियं वस्तु अन्यथाकारि व्याघातः स्यात् ( उदाहरति ) कुसुमैः जगत् प्रियते कुसुमायुधः तैरेव हन्ति ।

व्याख्या—व्याघातं व्याचष्टे—स्यादिति । अन्या क्रिया यस्य तत् अ क्रियम् = अपरव्यापारम् । वस्तु = पदार्थः अन्यथाकारि = विरुद्ध कार्य उच्यते तदा व्याघातः एतन्नामा अलंकार स्यात् = भवेत् । एकेन कर्त्रा येनोपा यद्वस्तु कृतम् ततो द्वितीयेन कर्त्रा तेनैवोपायेन तद्वस्तु पूर्वक्रियाविरोधि निष्पा तदा व्याघातः । उदाहरति—यैरिति । यैः कुसुमैः = पुष्पैः, जगत् = सं प्रियते = प्रसन्नो भवति कुसुमायुधः = कामः तैरेव = कुसुमैः जगत् = सं हन्ति = नाशयति । कुसुमानि प्रीतिकराणीति प्रसिद्धम् । तेषामेव पूर्वक्रि विरोधिमारणक्रियाकारित्वयुक्तं कामस्य कुसुमायुधत्वात् व्याघातोलंकारः ।

हिन्दी—एक व्यक्ति एक पदार्थ से जो कार्य करता है उसी पदार्थ से दूसरा व्यक्ति पूर्व कार्य से विरुद्ध कार्य करता है, ऐसी जगह पर व्याघात ङ्कार होता है। जिन फूलों से सारा संसार प्रसन्न होता है, कामदेव उन्हें जगत् को मारता है। यहाँ पर आनन्ददायक फूलों को भी कामदेव द्वारा दायक वर्णन करने से व्याघातालङ्कार हुआ ॥ ८५ ॥

गुम्फः कारणमाला स्याद्यथाप्राक्प्रान्तकारणैः ।
नयेन श्रीः श्रिया त्यागस्त्यागेन विपुलं यशः ॥ ८६ ॥

यथा प्राक्कारणैश्च यथा प्रान्तकारणैश्च गुम्फः कारणमाला ।

पूर्वं पूर्वं कारणं तत्र यथाप्राक्कारणैर्गुम्फः। यथा नयेनेत्यादौ। नयश्री-त्यागानां कारणानां पूर्वमुपादानात् अग्रेऽग्रे कारणवर्णने यथा प्रान्त-कारणानाम्—

यशस्त्यागात् श्रिया त्यागः श्रीर्नयेन महीयसा। इत्यत्र।

अत्र पूर्वं नयः श्रीकारणं श्रीस्त्यागकारणं त्यागो यशःकारणमित्य-ग्रिमाग्रिमं प्रति पूर्वं पूर्वपूर्वकारणत्वेनोपात्तमित्याह—गुम्फ इति ॥ ८६ ॥

अन्वयः—यथाप्राक्प्रान्तकारणैः गुम्फः कारणमाला स्यात् ( उदाहरति ) नयेन श्रीः, श्रिया त्यागः, त्यागेन विपुलं यशः ( भवति )।

व्याख्या—कारणमालामाह—गुम्फ इति। प्राक् च प्रान्तं च प्राक्प्रान्ते ते अनतिक्रम्येति यथाप्राक्प्रान्तम् तानि कारणानि तैः यथाप्राक्प्रान्तकारणैः। यथा प्राक्कारणैः तथा प्रान्तकारणैश्चेति भावः। परं प्रति पूर्वपूर्वस्य कारणैः पूर्वपूर्वं प्रति परपरस्य कारणैश्च गुम्फरचनाविशेषः कारणमाला अलङ्कारो भवति। कारणानां माला कारणमाला, यद्यप्यत्र कार्याणामपि माला संभवति, तथापि कवि-व्यासकारणवर्णनम् एवेत्युचितमभिधानम्। पूर्वं पूर्वं कारणं परं परं कार्यमित्येका, पूर्वं पूर्वं कार्यं परं पर कारणमिति द्वितीया। तत्र प्रथमामुदाहरति—नयेनेति। नयेन =नीत्या, श्रीः=लक्ष्मी, श्रिया=लक्ष्म्या त्यागः=दानम्। त्यागेन=दानेन, विपुलं= =महत्, यशः=कीर्तिः, भवति। अत्र पूर्वं नय-श्री-त्यागाः कारणानि। परं श्री-त्याग-यशांसि। तेषां कार्याणीति प्रथमा कारणमाला। द्वितीया यथा कुवलयानन्दे— भवन्ति नारकाः पापात् पापं दारिद्र्यकारणम्। दारिद्र्यमप्रदानेन तस्मात् दानपरो भवेत्। अत्र पूर्वं नरक-पाप-दारिद्र्य-कार्याणि ततश्च तेषां कारणानि पापदारिद्र्य-दानानीति द्वितीया कारणमाला।

हिन्दी—कारणमाला का लक्षण यह है कि जहाँ-जहाँ पूर्व पूर्व के पद आगे के पदों के कारण हों और उत्तर ( आगे ) के पद पूर्व पद के कारण हों वहाँ कारणमाला अलङ्कार होता है। भावार्थ यह हुआ कि पूर्व पूर्व पद उत्तरोत्तर पद के कारण हों, और उत्तर उत्तर के पद पूर्व पूर्व पद के कार्य हों, वहाँ पहली कारणमाला तथा पूर्व पूर्व के पद कार्य तथा उत्तर उत्तर के पद कारण हों वहाँ दूसरी कारणमाला होती है। यद्यपि यहाँ कार्यों की भी माला है तथापि कवि का कारणों पर ही विशेष ध्यान होता है इसलिए इसको कारणमाला कहा गया है।

उदाहरण जैसे—नयेन श्री=नीति से लक्ष्मी, लक्ष्मी से त्याग, त्याग से दान औ दान से विपुल यश होता है। यहाँ पूर्व पद नय, लक्ष्मी, और दान पद क्रम लक्ष्मी, दान और यश के कारण हैं और लक्ष्मी, दान, यश उनके कार्य हैं। प्रथम कारणमाला है। दूसरी कारणमाला का उदाहरण कुवलयानन्द में 'भवन्ति नारका:' यह है। पाप से नरक मिलता है, दरिद्रता से पाप होता है और दान न देने से दरिद्रता होती है। अतः दान करना चाहिये। यहाँ उत्तरपद पाप, दारिद्र्य और अप्रदान क्रम से नरक, पाप और दारिद्र्य रूप कार्य के कारण इसलिए यहाँ दूसरी कारणमाला हुई ॥ ८६ ॥

**गृहीतमुक्तरीत्यर्थश्रेणिरेकावली मता।**
**नेत्रे कर्णान्तविश्रान्ते कर्णौ दोर्मूलदोलिनौ ॥ ८७ ॥**

**एकावली तु यत्रार्थश्रेणिर्गृहीतमुक्तरीतिगता भवति। यथा—नेत्रे त्यादौ। नेत्रे कर्णान्तविश्रान्ते इत्यनेनोक्तयोर्नेत्रकर्णयोर्मध्ये नेत्रस्य त्यागोऽपि कर्णस्याऽग्रहणात्। एवं च गृहीतं मुक्तं च यथा स्या गृहीतमुक्त रीतिस्तस्यामर्थश्रेणिरेकावलीत्याह—गृहीतेति।**

**दोःस्तम्भौ जानुपर्यन्तप्रलम्बौ तस्य भूभुजः। इत्युत्तरार्द्धम् ॥ ८७ ॥**

**अन्वयः**—गृहीतमुक्तरीत्यर्थश्रेणिः एकावली मता, (उदाहरति) नेत्रे कर्णान्त विश्रान्ते कर्णौ दोर्मूलदोलिनौ।

**व्याख्या**—एकावलीमाह—गृहीता च=स्थापिता च मुक्ता च=त्यक्ता चे गृहीतमुक्ता सा चासौ रीतिः=विशेष्यविशेषणत्वप्रतिपादनशैली तदा निबद्ध स्थापिता याऽर्थानां=पदार्थानां श्रेणिः=पङ्क्तिः तदा एकावली मता। एकाव एकयष्टिको हारविशेषः। तत्सादृश्यात् अस्यालङ्कारस्यैकावलीति नाम। पूर्वं प्रति परं परं विशेषणत्वेन विशेष्यत्वेन वा स्थापितमपोहितश्च यत्र स्या तत्रैकावली। पूर्वं पूर्वं प्रति विशेषणत्वेन स्थापने अपोहने चोदाहरति—नेत्रे इति तस्य=राज्ञः नेत्रे = नयने। कर्णयोरन्तौ कर्णान्तौ = श्रोत्रान्तौ तयोर्विश्रा स्थिते स्तः। कर्णौ च दोषो मूलं दोर्मूलं तयोः दोर्मूलयोः भुजमूलयोः दोलनं यर रस्तीति दोर्मूलदोलिनौ=स्कन्धावलम्बिनौ स्तः। पूर्वं नेत्रयोर्विशेषणत्वेन कर्णयो ग्रहणं पुनश्चाग्रे तयोः कर्णयोः विशेषणत्वेन त्यागो विशेष्यत्वेन च ग्रहणं चेत्येकावली

हिन्दी—एकावली का लक्षण—जहाँ पूर्व पदों को विशेषण या विशेष्य बनाये या उनके विशेषण और विशेष्यत्व का निषेध करे वहाँ एकावली अलङ्कार होता है। एकावली मोती या हीरों के एक लर वाले हार को कहते हैं। उसकी तरह होने के कारण इस अलङ्कार को भी लक्षणया एकावली कहा गया है। उदाहरण जैसे—प्रस्तुत राजा के नेत्र कानों तक फैले हैं और कान भुजमूल ( स्कन्ध ) पर्यन्त हिल रहे हैं। यहाँ 'कर्णान्तविश्रान्ते नेत्रे' इस पद द्वारा कान को नेत्र का विशेषण बनाया है बाद में इसी विशेषण रूप कान को 'कर्णौ दोर्मूलदोलिनौ' पद से भुजमूल का विशेष्य बनाया है। उसी हार के सदृश इस अलङ्कार में माला की तरह विशेषण-विशेष्य भाव की स्थापना या त्याग किया जाता है। इस अलङ्कार के चार भेद होते हैं—पूर्व पदों के प्रति उत्तर पदों के विशेषणत्वेन स्थापना करें या त्याग करें तो दो भेद होते हैं, तथा पूर्व पदों के प्रति उत्तर पदों को विशेष्यतया स्थापित करें तो दो भेद होते हैं। उनमें प्रथम दो भेदों का उदाहरण 'नेत्रे कर्णान्त-' यह श्लोकार्ध है। उस राजा के नेत्र कर्णपर्यन्त लम्बे हैं और कर्ण स्कन्ध पर्यन्त लम्बे हैं। यहाँ कर्णान्त इस उत्तर पद को नेत्र रूप पूर्व पद का विशेषण बनाया गया है और आगे 'कर्णान्त' इस पद को विशेषण नहीं रखा अपितु दोर्मूल का विशेष्य बना दिया, अतः पूर्व पद के प्रति उत्तरपद की विशेषणत्वेन स्थापना और अपोहन ( त्याग ) करने से एकावली अलङ्कार हुआ ॥ ८७ ॥

**दीपकैकावलीयोगान्मालादीपकमुच्यते ।**
**स्मरेण हृदये तस्यास्तेन त्वयि कृता स्थितिः ॥ ८८ ॥**

यत्र दीपकैकावल्योर्योगस्तन्मालादीपकम् । यथास्मरेणेत्यादौ । तस्या हृदये स्मरेण स्थितिः कृता हृदयेन च त्वयि तस्या मनस्त्वय्येव लग्नं तिष्ठतीत्यर्थः । अत्र दीपकं स्फुटमेव स्थितिरित्यस्योभयत्राऽन्वयात् । एकावल्यपि स्मरस्य गृहीतस्याऽग्रे त्यागात् । गृहीतमेवाऽग्रे त्यज्यते यत्र तद् गृहीतमुक्तमित्यन्ये ॥ ८८ ॥

**अन्वयः**—दीपकैकावलीयोगात् मालादीपकम् उच्यते ( उदाहरति ) स्मरेण तस्याः हृदये स्थितिः कृता हृदयेन त्वयि ( स्थितिः ) कृता ।

**व्याख्या**—मालादीपकमाह—दीपकैकावलीति । दीपकञ्चैकावली चेति दीपकै-

कावल्यो तयोर्योगे = एकत्र समावेशे मालादीपकं भवति। उच्यते = कथ्यते। उदाहरति—स्मरेणेति। नायकं प्रति वचनम्। स्मरेण=कामेन, तस्याः=नायिकायाः, हृदये = मनसि, अवस्थितिः = निवासः कृता = विहिता। तेन = नायिकाहृदयेन त्वयि = नायके स्थितिः = निवासः कृतः। अत्र स्थितिपदं हृदये नायके च सम्बद्धमिति दीपकम्। पूर्वं हृदयस्य मदनाधारतया ग्रहणम्। ततश्च नायकस्याधारत्ववर्णनेन हृदयाधारत्वत्यागः इत्येकावली। दीपकैकावल्योरेकत्र समावेशान्मालादीपकम्।

**हिन्दी**—दीपक और एकावली के एकत्र समावेश को मालादीपक कहते हैं। इसका उदाहरण 'स्मरेण हृदये' इत्यादि है। कामदेव ने उस नायिका के हृदय में निवास किया है और नायिका के हृदय ने नायक के हृदय में निवास किया है। यहाँ यह नायक के प्रति दूती का वाक्य है। स्थिति पद हृदय और नायक दोनों ही में सम्बद्ध है इसलिए दीपक हुआ। पहले कामदेव के निवास के आधार रूप से नायिका के हृदय को ग्रहण किया बाद में नायक को आधार बनाकर नायिका के हृदयरूपी आधार को छोड़ दिया अतः ग्रहण और त्याग से एकावली हुआ॥ ८८॥

**सारो नाम पदोत्कर्षः सारता च यथोत्तरम्।**
**सारं सारस्वतं तत्र काव्यं तत्र शिवस्तवः॥ ८९॥**

यत्रोत्कर्षरूपा सारता यथोत्तरं तत्र सारः। न च चकाराऽनुपपत्तिः। उत्कर्षश्च सारतोत्कर्षरूपा च सारता यथोत्तरमित्यर्थकरणात्। चकारस्य त्वर्थत्वात् अन्यसारतानिषेधात्। यथा—सारमित्यादौ। अत्र सारस्वतकाव्यशिवस्तवानां यथोत्तरमुत्कर्षादित्याह—सार इति। उत्कर्षेत्यनेनाऽपकर्षमादाय सारतायां न सार इत्युक्तमिति भावः॥ ८९॥

**अन्वयः**—सारतायाः यथोत्तरम् पदोत्कर्षः सारो नाम अलंकारः। (उदाहरति) (संसारे) सारस्वतं सारम्, तत्र काव्यं तत्र शिवस्तवः।

**व्याख्या**—सारालंकारं व्याख्याति—सारतायाः = उत्कृष्टतायाः, यथोत्तरम् = उत्तरोत्तरम्, पदोत्कर्षः = वस्तूत्कर्षः, सारः = सारनामालंकारः। उदाहरति—सारमिति। अत्र संसारे सरस्वत्या इदं सारस्वतम् = वाङ्मयम् शास्त्रम्, सारम् = तत्त्वम्, तत्रापि = शास्त्रेऽपि, काव्यम् = कविकर्म, सारम् = श्रेष्ठम्। तत्राऽपि च =

काव्येपि, शिवस्तवः = शिवस्तुतिरूपं काव्यम् सारमस्ति। अत्र सारस्वत-काव्य-शिवस्तवानामुत्तरोत्तरमुत्कर्षवर्णनात् सारालङ्कारः।

**हिन्दी**—जहाँ उत्कृष्टता की उत्तरोत्तर अधिकता होती जाय वहाँ सार नामक अलंकार होता है। उदाहरण—इस संसार में विद्या श्रेष्ठ है, उसमें भी काव्य बनाना श्रेष्ठ है और उसमें भी शिवस्तुतिरूप काव्य बनाना और श्रेष्ठ है। यहाँ सारता का उत्तरोत्तर उत्कर्ष होने से सारालंकार हुआ। इस अलंकार के श्लाघ्य गुणोत्कर्ष, अश्लाघ्यरूप गुणोत्कर्ष और उभयोत्कर्ष ऐसे तीन भेद होते हैं जिन्हें अन्यत्र जानना चाहिये॥ ८९॥

**उदारसारश्चेद्भाति भिन्नोऽभिन्नतया गुणः।**
**मधुरं मधु पीयूषं तस्मात्तस्मात्कवेर्वचः॥ ९०॥**

यत्रोत्कृष्टत्वेन वर्ण्यमानो भिन्नोऽभिन्नत्वेन प्रतीयते स **उदारसारः**। यथा मध्वाद्यपेक्षया वर्ण्यमानं कवित्वमाधुर्यं श्रोत्रग्राह्यतया रसनग्राह्या-त्तस्माद्भिन्नमपि मधुरत्वेनैकतया व्यपदिश्यत इत्याह—उदारेति॥ ९०॥

**अन्वयः**—चेत् यथोत्तरं भिन्नः गुणः अभिन्नतया भाति (तदा) उदार-सारः (स्यात् उदाहरणम्) मधु मधुरं तस्मात् पीयूषं तस्मात् कवेर्वचः।

**व्याख्या**—उदारसारालंकारमाह—उदारेति। चेत् = यदि, तथोत्तरम्=श्रेष्ठ-तया वर्धमानो गुणः भिन्नः अपि = विसदृशः अपि अभिन्नतया एकतया = एका-कारेण भाति = प्रतीयते तदा उदारसारम् एतन्नामालंकारो भवति। उदाहरति—मधुरमिति। अत्र = संसारे मधु=क्षौद्रम्, मधुरम् = इष्टम् तस्मात् = मधुनः मधुरम्, पीयूषम् = अमृतम्, तस्मात् = पीयूषात् मधुरम् कवेर्वचः = काव्यमस्ति। संसारे सर्वतोऽधिकं माधुर्यं काव्ये अस्ति। अत्र श्रेष्ठतया कथ्यमानं माधुर्यं काव्यनिष्ठं श्रोत्रग्राह्य, पीयूषादिनिष्ठञ्च रसनाग्राह्यत्वाद् भिन्नं तथाप्येकत्वेन वर्णितमित्यत्र उदारसारालंकारः अस्ति।

**हिन्दी**—जहाँ भिन्न होने पर भी उत्कृष्ट गुण अभिन्नरूप से बताया जाय वहाँ उदारसार अलंकार होता है। इसका उदाहरण 'मधुरं मधुपीयूषं' यह पद है। शहद मीठा है, उससे मीठा अमृत है और उससे भी अधिक मीठा कवि का वचन है। (काव्यमाधुर्य श्रोत्रग्राह्य है, शहद आदि का माधुर्य रसनाग्राह्य होने के कारण

उससे भिन्न है तथापि प्रकृत में एकरूप से वर्णन किया गया है इसलिये यहाँ उदारसार अलंकार हुआ ) ॥ ९० ॥

**यथासंख्यं द्विधार्थाश्चेत्क्रमादेकैकमन्विताः ।**
**शत्रुं मित्रं द्विषत्पक्षं जय रञ्जय भञ्जय ॥ ९१ ॥**

क्रमिकाणां क्रमिकेष्वन्वयो यथासङ्ख्यम् । यथा शत्रुं जय मित्रं रञ्जय द्विषत्पक्षं विपदावृतत्वं वर्जयेत्यत्रेत्याह—यथासङ्ख्यमिति ॥ ९१ ॥

**अन्वयः**—चेत् द्विधाः अर्थाः क्रमात् एकैकमन्विताः तदा यथासंख्यालंकारः। ( उदाहरति ) शत्रुं मित्रं द्विषत्पक्षं च ( क्रमेण ) जय, रञ्जय, भञ्जय ।

**व्याख्या**—यथासंख्यालङ्कारमाह—यथासंख्यमिति । द्विधाः = द्विप्रकारकाः क्रियाकारकरूपाः अर्थाः = वाच्याः । क्रमेण = क्रमशः एकैकम् = एकं एकं प्रति अन्विताः = अन्वयमासादयन्ति तदा यथासंख्यालङ्कारो भवति । क्रमेण उक्तानां कारकाणां क्रियाणां च तेनैव क्रमेण क्रियाया कारकेषु च अन्वयः यथासंख्यालङ्कारः । उदाहरति— शत्रुमिति । हे राजन् ! त्वं शत्रुम् = अरिम् जय = विजयस्व, मित्रम् = सुहृद्जनम् रञ्जय = प्रसादय, द्विषत्पक्षम् = शत्रुपक्षम् भञ्जय = नाशय। अत्र प्रथमं कर्मरूपकारकपदार्थानभिधाय ततस्तदन्वयिनः क्रियापदार्था अभिहिता। तत्र प्रत्येकं कर्मकारकाणां क्रमेण शत्रुं जय मित्रं रञ्जय द्विषत्पक्षं भञ्जय इत्यन्वयात् यथासंख्यालंकारः ।

**हिन्दी**—जहाँ क्रम से कहे हुए अनेक कारकों अथवा क्रियाओं का क्रम से परस्पर में अन्वय हो वहाँ यथासंख्यालङ्कार होता है । जैसे—प्रकृत में क्रम से कहे हुए शत्रु आदि कर्मकारकों का जयादि क्रियाओं के साथ क्रम से अन्वय होता है । शत्रु को जीतो, मित्र को प्रसन्न करो, शत्रु पक्ष को नष्ट करो । इसलिए यथासंख्यालङ्कार हुआ ॥ ९१ ॥

**पर्यायश्चेदनेकत्र स्यादेकस्य समन्वयः ।**
**पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनोपमा ॥ ९२ ॥**

एकस्याऽनेकत्र क्रमेण वृत्तौ पर्य्यायः । यथा मुखोपमायाः पूर्वं कमले पश्चाच्चन्द्रे इत्याह—पर्याय इति ॥ ९२ ॥

**अन्वयः**—एकस्य अनेकत्र समन्वयः स्यात् चेत् तदा पर्यायः भवति । ( उदाहरति ) कामिनीवदनोपमा पद्मं मुक्त्वा चन्द्रं गता ।

**व्याख्या**—पर्यायालङ्कारं व्याचष्टे—पर्यायश्चेदिति। एकस्य=एकपदार्थस्य अनेकत्र=अनेकपदार्थे समन्वयः = सम्बन्धः स्यात्=भवेत् तदा पर्यायः = एतन्नामालङ्कारः स्यात्। उदाहरति—पद्ममिति। कामिन्याः=सुन्दर्याः नायिकायाः वदनस्य = मुखस्य उपमा = सादृश्यमिति कामिनीवदनोपमा पद्मम् = कमलम् मुक्त्वा=त्यक्त्वा चन्द्रम्=शशिनम् गता=प्राप्ता। (अयं भावः-दिवसे कमलानि विकसितानि भवन्ति ततः कामिनीवदनोपमा दिवसे कमले आसीत्। रात्रौ तेषा संकोचात् तानि विहाय चन्द्र गता।) अत्रैकस्याः कामिनीवदनोपमायाः पद्मचन्द्राद्यनेकत्राधारतायाः वर्णनात् पर्यायालङ्कारः।

**हिन्दी**—जहाँ किसी एक पदार्थ का क्रम से अनेक पदार्थों में अन्वय वर्णन किया जाय वहाँ पर्यायालंकार होता है। उदाहरण जैसे—कामिनी के वदन की उपमा दिन में विकसित होने के कारण जो कमलों में थी वह रात को कमलों के संकोच के कारण उन्हें छोड़कर चन्द्रमा में चली गयी। यहाँ एक कामिनी के वदन की उपमा का अनेक कमल और चन्द्रमा में क्रम से सम्बन्ध का वर्णन होने के कारण पर्यायालंकार हुआ॥ ९२॥

**परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः।**
**जग्राहैकं शरं मुक्त्वा कटाक्षान् शत्रुयोषिताम्॥ ९३॥**

यत्र न्यूनाधिकयोरेकं दत्वा परं गृह्यते तत्र **परिवृत्तिः**। यथैकशरदानेनाऽनेककटाक्षप्राप्तावित्याह—**परिवृत्तिरिति** एकशरेण शत्रून्निहत्य तदीयस्त्रीणां कटाक्षभाजनं त्वं जात इत्यर्थः॥ ९३॥

**अन्वयः**—न्यूनाधिकयोः मिथः विनिमयः परिवृत्तिः (स्यात्) (उदाहरति) एकं शरं मुक्त्वा शत्रुयोपितां कटाक्षान् जग्राह।

**व्याख्या**—परिवृत्यलङ्कारमाह—परिवृत्तिरिति। न्यूनस्य=अल्पस्य अधिकस्य=प्रचुरस्य मिथः=परस्परं विनिमयः=परिवर्तनम् परिवृत्तिः=एतन्नामालङ्कारः। एकम्=केवलं शरम्=बाणम्। मुक्त्वा=त्यक्त्वा। शत्रूणां योषितः शत्रुयोषितः तेषां शत्रुयोषिताम् वैरिकामिनीनां कटाक्षान्=अपाङ्गदृष्टीः जग्राह= गृहीतवान्। एकेन शरेण शत्रुं निहत्य तत्स्त्रीणा कटाक्षान् अनेकान् स्वीचकार। शत्रुयोषित: पतिहननात् भूयोभूयः कटाक्षेण पश्यन्ति। अत्रैकेन बाणेनानेककटाक्ष-

ग्रहणात् न्यूनेनाधिकस्य परिवर्तनम्। परिवृत्तिर्द्विधा—संख्याकृता स्वरूपकृता च। तयोरत्र संख्याकृता।

हिन्दी—न्यून अथवा अधिक से अदला-बदली करने पर परिवृत्ति अलंकार होता है। किसी राजा ने शत्रुओं पर एक बाण छोड़कर शत्रु की स्त्रियों के अनेक कटाक्षरूप बाणों को स्वीकार किया। शत्रुओं की तरुणी पत्नियों ने एक बाण के बदले अनेकों कटाक्ष-बाणों से राजा को मारा। अतः यहाँ परिवृत्ति अलंकार हुआ॥ ९३॥

**परिसंख्या निषिध्यैकमन्यस्मिन् वस्तुयन्त्रणम्।**
**स्नेहक्षयः प्रदीपेषु स्वान्तेषु न नतभ्रुवाम्॥ ९४॥**

**अन्वयः**—एकं निषिध्य अन्यस्मिन् वस्तुनः यंत्रणं परिसंख्या (भवति उदाहरति) प्रदीपेषु स्नेहक्षयः नतभ्रुवां स्वान्तेषु न।

**व्याख्या**—परिसंख्यालंकारं व्याचष्टे—परिसंख्येति। एकस्मिन् स्थले किमपि वस्तु निषिध्य अन्यस्मिन् स्थले तस्यैव वस्तुनो यन्त्रणम्=नियमनम् परिसंख्या। उदाहरति—स्नेहक्षय इति। प्रदीपेषु= दीपेषु स्नेहस्य = तैलस्य क्षयः = नाशः स्नेहक्षयः = तैलक्षयः किन्तु नतभ्रुवां = स्त्रीणां स्वान्तेषु=मनःसु स्नेहस्य= अनुरागस्य न क्षयः। अत्र श्लेषमहिम्ना तैलानुरागरूपोभयपदार्थस्यापकर्षतया तैलरूपार्थकस्नेहरूपार्थस्य दीपेष्वस्तित्वं निषिध्य तस्यैव वस्तुनोऽनुरागरूपस्य तद्भिन्नरूपत्वं कान्तास्वान्तेषु स्थितेर्नियमनात् लक्षणसमन्वयः।

हिन्दी—किसी वस्तु का एक जगह निषेध कर दूसरी जगह उसी वस्तु का अस्तित्व कहा जाय तो परिसंख्यालंकार होता है। जहाँ रात्रि में दीपों में स्नेह (तैल) का क्षय होता है किन्तु सुन्दरियों के हृदय में स्नेह (अनुराग) का क्षय नहीं होता—सदा प्रियतम के सान्निध्य में होने के कारण। स्नेह शब्द श्लिष्ट होने के कारण तैल और अनुराग दोनों अर्थों को कहने वाला है। यहाँ स्नेहरूप वस्तु का दीपक में अभाव बताकर कामिनियों के हृदय में उसी का अस्तित्व बताया गया है। इसलिये यहाँ परिसंख्यालंकार हुआ॥ ९४॥

**विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः।**
**कान्ताचित्तेऽधरे वापि कुरु त्वं वीतरागताम्॥ ९५॥**

**अन्वयः**—तुल्यबलयोः चातुरीयुतः विरोधः विकल्पः ( भवति उदाहरति ) त्वं कान्ताचित्ते अधरे वापि वीतरागतां कुरु ।

**व्याख्या**—विकल्पालंकारमाह—तुल्यबलयोरिति । तुल्यबलयोः = समानबलयोः चातुरी = चतुरता तया युक्तः चातुरीयुतः विरोधः = एककालं कर्तुमशक्ययोः युगपत्कथनम् विकल्पालङ्कारो भवति । उदाहरति—कान्ताचित्त इति । खण्डितानायिकोक्तिः । कान्तायाः मम चित्ते अन्तःकरणे, अधरे = स्वाधरे वा, वीतरागतां = अनुरागशून्यत्वं=रक्तताराहित्यं वा कुरु = विधेहि । मय्यनुरागाभावं स्वाधरे अन्यनायिकाकर्तृकचुम्बनजन्यरक्तताभावं च कुरु । अत्र पूर्वोक्तकार्यद्वयस्य युगपत्कर्तुमशक्यत्वेऽपि शक्यवर्णनेन लक्षणसङ्गतिः । अस्यालङ्कारस्य विरुद्धयोः सादृश्यं बीजम् तस्यैव चमत्कारजनकत्वात् । अतोऽत्र विकल्पनामालंकारः ।

**हिन्दी**—एक समय में न होने योग्य दो कार्यों को अपनी चतुरता से एक समय बतला देने पर विकल्प नामक अलंकार होता है । इसका उदाहरण श्लोकोत्तरार्द्ध 'कान्ताचित्ते' इत्यादि है । खण्डिता नायिका अपने पति से कहती है, कि हे रसिक शिरोमणि ! आप मेरे चित्त में और अपने ओष्ठ में वीतरागिता ( अनुरागाभाव, रक्तता का अभाव ) को करें । नायिका में अनुराग और अधर में रक्तता का निरास एक काल में असम्भव है, तथापि उन दोनों का एककालावच्छेदेन सम्बन्ध बताया इसलिये यहाँ विकल्पालंकार हुआ ॥ ९५ ॥

**भूयसामेकसम्बन्धभाजां गुम्फः समुच्चयः ।**
**नश्यन्ति पश्चात्पश्यन्ति भ्रश्यन्ति च तव द्विषः ॥ ९६ ॥**

एकसम्बन्धानां बहूनां वर्णने समुच्चयः । यथा—नश्यन्तीत्यत्र । तत्र नाशादीनां बहूनामेकशत्रुगतत्वेन वर्णनादित्याह—भूयसामिति ॥ ९६ ॥

**अन्वयः**—एकसम्बन्धभाजां भूयसां गुम्फः समुच्चयः ( भवति उदाहरति ) तव द्विषः नश्यन्ति पश्चात् पश्यन्ति भ्रश्यन्ति च ।

**व्याख्या**—समुच्चयालंकारमाह-भूयसामिति । एकस्मिन् सम्बन्धः एकसम्बन्धः तं भजन्तीति एकसम्बन्धभाजस्तेषामेकसम्बन्धभाजां = एकत्रान्वयिनाम् । भूयसाम्= बहूनामनेकगुणानामनेकक्रियाणामनेककारकाणां वा गुम्फः = रचना समुच्चयालंकारः । उदाहरति—नश्यन्तीति । हे राजन् ! तव = भवतः द्विषः = वैरिणः नश्यन्ति = राज्यच्युताः भवन्ति पश्चात् = पृष्ठभागे पश्यन्ति = मामनुसरति किमि-

त्याशङ्कया पृष्ठभागमवलोकयन्ति। भ्रश्यन्ति = भ्रियन्ते। अत्रानेकक्रियाणां नाशपश्चाद्दर्शनभ्रंशरूपाणामेकशत्रुरूपकारकान्वयात् समुच्चयालंकारः।

**हिन्दी**—एक उद्देश्य से सम्बन्ध रखने वाले अनेक गुण, क्रिया, कारकों का वर्णन करना समुच्चयालंकार होता है। उदाहरण—हे राजन्! आपके शत्रु राज्यच्युत हो जाते हैं, पीछे देखते हैं और भ्रष्ट हो जाते हैं। यहाँ शत्रुनाशरूप एक कार्य में नश्यन्ति, पश्यन्ति, भ्रश्यन्ति इन तीनों क्रियाओं का सम्बन्ध वर्णन करने से समुच्चय नामक अलंकार हुआ॥ ९६॥

**समाधिः कार्यसौकर्यं कारणान्तरसन्निधेः।**
**उत्कण्ठितां च कलयन् जगामास्तं च भानुमान्॥ ९७॥**

यत्र कर्तव्यस्य कार्यस्य केनचित्कारणेन सुकरता तत्र समाधिः। यथोत्कण्ठितामित्यादौ। अत्राऽभिसारिकासमुत्सुकस्य नायकस्याऽर्थसिद्धिः सूर्यास्तमयेन घटितेत्याह—समाधिरिति॥ ९७॥

**अन्वयः**— कारणान्तरसन्निधेः कार्यसौकर्यं समाधिः (स्यात् उदाहरति। उत्कण्ठितां कलयन् भानुमान् अस्तं जगाम।

**व्याख्या**—समाध्यलंकारमाह—समाधिरिति। अन्यत् कारणं कारणान्तरं तस्य सन्निधिः = सामीप्यं तस्मात् कारणान्तरसन्निधेः। कार्यसौकर्यं कार्यस्य = फलस्य सौकर्यम् = सुसाध्यत्वम् स्यात्तदा समाधिः स्यात् = भवेत् समाधिनामा अलंकारो भवति। उदाहरति—उत्कण्ठितामिति। उत्कण्ठितां = प्रियाभिसरणोत्सुकाम्, कलयन् = जानन् भानुमान् = सूर्यः अस्तं जगाम = अस्तोऽभूत्। यत्रैकेन कारणेन कार्यस्य साध्यत्वे काकतालीयन्यायेन कारणान्तरलाभात् सौकर्यं तत्र समाध्यलंकारः। समुच्चये खले कपोतन्यायेन समानतया नैकेषां कारणानां कथनमित्यनयोर्भेदः। अत्रोत्कण्ठैव प्रियाभिसरणं प्रति पर्याप्तं कारणम्। सूर्यास्तगमनात् तत्र सौकर्यमात्रम्। अतः समाधिनामालंकारः।

**हिन्दी**—समाधि अलंकार उसे कहते हैं जहाँ किसी कार्य के साधन में एक कारण के पर्याप्त होने पर भी काकतालीय न्याय से अन्य कारण के लाभ से कार्य में शीघ्रता या सौकर्य हो जाय। जैसे—'उत्कण्ठितां च कलयन्' यहाँ पर कान्ता की प्रियाभिसार के प्रति उत्कण्ठा को जानता हुआ सूर्य अस्त हो गया। यहाँ पर प्रियाभिसार में उत्कण्ठा ही पर्याप्त कारण थी किन्तु सूर्य के अस्त हो जाने से उसमें

आसानी हो गयी इसलिए यहाँ समाधि अलंकार हुआ। समुच्चय में खले कपोत न्याय से समानरूप से अनेक कारण किसी कार्य के होते हैं यहाँ एक प्रधान रहता है। अन्य उसके सहायक बन जाते हैं। यही इन दोनों अलंकारों में अन्तर है।९७।

प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः।
जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधःकृतौ ॥ ९८ ॥

यत्र बलवतः शत्रोः पराभवेऽक्षमेण तदीयस्य पराभवो वर्ण्यते तत्र प्रत्यनीकम्। यथा—जैत्रेत्यादौ। अत्रोत्पलाभ्यां स्वजैत्रे नेत्रे जेतुमशक्ये नेत्रयोः कर्णान्तविश्रान्ततया अनुगतौ कर्णौ भूषणतयाऽधरीकृताविति वर्णनादित्याह—प्रत्यनीकमिति ॥ ९८ ॥

**अन्वयः**—बलवतः शत्रोः पक्षे पराक्रमः प्रत्यनीकम् (भवति उदाहरति) उत्पलाभ्यां जैत्रनेत्रानुगौ कर्णौ अधः कृतौ।

**व्याख्या**—प्रत्यनीकालंकारं व्याचष्टे—प्रत्यनीकमिति। बलवतः = अतिशयपराक्रमवतः शत्रोः = अरेः पक्षे = सहायके पराक्रमः = बलप्रयोगः प्रत्यनीकम् = प्रत्यनीकनामालंकारः। बलवतः शत्रोः पराजयस्यासम्भाव्यत्वे तत्सहायकस्य पराजय इत्यर्थः। उदाहरति—उत्पलाभ्याम् = कमलाभ्याम् जैत्रयोः = स्वविजयिनोः नेत्रयोः = नयनयोः अनुगौ = अनुगामिनौ कर्णौ = श्रोत्रे अधः = नीचैः कृतौ = पराजितौ। अवतंसतया तदुपरिस्थितत्वात् अधस्तात् विहितौ। अत्र कमलाभ्यां स्वजयिनोः नेत्रयोः विजयः असम्भावितत्तया नेत्रानुगकर्णपराजयवर्णनात् प्रत्यनीकालंकारः।

**हिन्दी**—बलवान शत्रु पर विजय न प्राप्त कर सकने पर उसके सहायक के प्रति पराक्रम करना प्रत्यनीकालंकार होता है। जैसे—कमलों ने अपने विजयी नेत्रों के अनुगामी कर्णों को नीचे कर दिया, अवतंस के रूप में कान पर चढ़कर उसको दबा दिया। यहाँ कमल ने अपने शत्रु नेत्र के अनुगामी कर्ण पर पराक्रम दिखाया। इसलिए यहाँ प्रत्यनीकालंकार हुआ॥ ९८ ॥

प्रतीपमुपमानस्य हीनत्वमुपमेयतः।
दृष्टं चेद्वदनं तस्याः किं पद्मेन किमिन्दुना ॥ ९९ ॥

उपमेयाऽपेक्षयोपमानस्य हीनतावर्णने प्रतीपम्। मुखापेक्षया चन्द्रादेरित्याह—प्रतीपमिति ॥ ९९ ॥

**अन्वय:**—उपमानस्य उपमेयतः हीनत्वम् प्रतीपम् (भवति उदाहरति) तस्याः वदनं दृष्टं चेत् पद्मेन किं इन्दुना किम् ।

**व्याख्या**—प्रतीपालंकारं व्याख्याति—प्रतीपमिति । उपमेयतः = उपमेयापेक्षया, उपमानस्य हीनत्वम् = न्यूनत्वम् यदि वर्णितं भवेत् तदा प्रतीपालंकारो भवति । उदाहरति—दृष्टमिति । तस्याः = रमण्याः वदनम् = आननम् दृष्टं = अवलोकितम् चेत् तदा पद्मेन=कमलेन किम्, इन्दुना=चन्द्रमसा च किम् । पद्मचन्द्रौ निष्फलाविति भावः । अत्र प्रेयसीमुखावलोकनानन्तरम् पद्मचन्द्रयोर्निष्फलतावर्णनेन चन्द्रकमलयोरुपमानयोरुपमानात् कामिनीमुखान्न्यूनत्ववर्णनात् प्रतीपालंकारो भवति ।

**हिन्दी**- जहाँ उपमेय से उपमान की हीनता का वर्णन हो वहाँ प्रतीपालंकार होता है । उदाहरण—जैसे उस कामिनी का मुख यदि देख लिया तो कमल और चन्द्र से क्या प्रयोजन ? यहाँ उपमेय मुख की अपेक्षा उपमान कमल और चन्द्र को न्यून बताया गया तभी तो मुखदर्शन के बाद उनका दर्शन निष्फल होगा अतः यहाँ प्रतीपालंकार हुआ ॥ ९९ ॥

**उल्लासोऽन्यमहिम्ना चेद्दोषो ह्यन्यत्र वर्ण्यते ।**
**तदभाग्यं धनस्यैव यन्नाश्रयति सज्जनम् ॥ १०० ॥**

यत्राऽन्यगुणेनाऽन्यत्र दोषो वर्ण्यते तत्रोल्लासः । सज्जने गुणधरे न दोषः, धनानामेवासौ दोषो यदीदृशगुणवदनाश्रयणमिति । निर्गुणाश्रयणे तु न दोषो वर्ण्यते—इत्याह—उल्लास इति ॥ १०० ॥

**अन्वयः**—चेत् अन्य महिम्ना अन्यत्र दोषः वर्ण्यते (तदा) उल्लासः (भवति उदाहरति) तदभाग्यं धनस्य एव यत् सज्जनं न आश्रयति ।

**व्याख्या**—उल्लासालंकारमाह—उल्लास इति । चेत्=यदि अन्यस्य महिम्ना= अन्यगुणेन अन्यत्र = अन्यस्मिन् स्थले दोषः = दूषणं वर्ण्यते=कथ्यते तदा उल्लासः अलंकारः भवति । उदाहरति—तदभाग्यमिति—यत् धनम्=वित्तन् सज्जनम् = सत्पुरुषम् न आश्रयति = नासादयति तत् धनस्यैव = वित्तस्यैव अभाग्यम् = दौर्भाग्यम् अस्ति । अत्र सज्जनगुणेन धनस्य तदनाश्रयरूपदोषकथनम् । अतः उल्लासालंकारोऽत्र ।

**हिन्दी**—जहाँ दूसरे के गुण से दूसरी जगह दोष का वर्णन हो वहाँ उल्लास अलंकार होता है । उदाहरण जैसे—वह धन ही का अभाग्य है जो वह सज्जन

के यहाँ नहीं जाता। यहाँ सज्जन के गुण से धन में सज्जन के यहाँ न रहनारूप दोष का वर्णन होने से उल्लास अलंकार हुआ ॥ १०० ॥

**तद्गुणः स्वगुणत्यागादन्यतः स्वगुणोदयः।**
**पद्मरागारुणं नासामौक्तिकं तेऽधराश्रितम् ॥ १०१ ॥**

यत्राऽन्ययोगेनाऽन्यथाभूतं पुनरन्ययोगेन तथैव वर्ण्यते तत्र तद्गुणः। यथाऽग्रे मेचकीभूतस्य शेषस्य हरकण्ठरुचा नीलतां नीतस्य कस्यचिद्राज्ञो यशसा शुभ्रताप्रापणे— इत्याह—तद्गुण इति। अत्र नोच्छेदोऽपि त्वन्यथा भावः ॥ १०१ ॥

**अन्वयः**—स्वगुणत्यागात् अन्यतः स्वगुणोदयः तद्गुणः ( भवति उदाहरति ) अधराश्रितम् ते नासामौक्तिकम् पद्मरागारुणम् ( अस्ति )।

**व्याख्या**—तद्गुणालंकारमाह—तद्गुण इति। स्वगुणस्य त्यागः स्वगुणत्यागः तस्मात् स्वगुणत्यागात् = निजगुणनिरसनात् अन्यतः = अन्यस्मात् स्वस्मिन् गुणोदयः स्वगुणोदयः = आत्मनि गुणोत्पत्तिः तद्गुणः = एतन्नामा अलंकारः भवति। तस्याप्रकृतस्य गुणः तद्गुणः। उदाहरति—पद्मरागेति। अधराश्रितम् = अधराधरसंसक्तम् तव=ते नासामौक्तिकम् = नासिकामुक्ताफलम् पद्मरागारुणम्= पद्मरागमणिवद् रक्तमरुणमस्ति। अत्र श्वेतस्य नासामौक्तिकस्य अरुणाधराधरस्य रक्तगुणग्रहणात् तद्गुणालंकारः।

**हिन्दी**—जहाँ अपने गुण का त्याग कर दूसरे के गुणों को ग्रहण करने का वर्णन किया जाय वहाँ तद्गुणालंकार होता है। जैसे—अधरोष्ठ पर लटका हुआ तेरी नासिका का मोती पद्मरागमणि की तरह शोभित होता है। यहाँ मोती ने अपने श्वेत गुण का त्याग कर अधर के सुन्दर रक्तगुण को धारण कर लिया है ऐसा वर्णन होने से तद्गुणालंकार हुआ ॥ १०१ ॥

**पुनः स्वगुणसम्प्राप्तिर्विज्ञेया पूर्वरूपता।**
**हरकण्ठांशुलिप्तोऽपि शेषस्त्वद्यशसा सितः ॥ १०२ ॥**

**अन्वयः**—पुनः स्वगुणसम्प्राप्तिः पूर्वरूपता विज्ञेया। ( उदाहरति ) शेषः हरकण्ठांशुलिप्तोऽपि त्वद्यशसा सितः।

**व्याख्या**—पूर्वरूपतालंकारं लक्षयति—पुनरिति। अन्यगुणसम्बन्धकथनानन्तरमपि स्वगुणसम्प्राप्तिः = स्वगुणस्य सम्प्राप्तिः स्वगुणसम्प्राप्तिः = आत्मगुणलाभः पूर्वरूपतालंकारः। विज्ञेया = विज्ञेयः। उदाहरति—हरकण्ठेति। शेषः =

शेषनागः हरस्य कण्ठः हरकण्ठः तस्य अंशुभिः किरणैः लिप्तः=अनुसक्तोऽपि शिवस्य नीलकण्ठत्वात् तन्नीलिम्ना नीलोऽपि तव यशसा त्वद्यशसा सितः =श्वेतः ।

हिन्दी—अपने में आये हुए दूसरे के गुण का त्याग कर पुनः अपने गुण को ग्रहण करना जहाँ वर्णित हो वहाँ पूर्वरूपता अलंकार होता है। जैसे—शंकरजी के कण्ठ में लिपटा हुआ शेष उनके कण्ठ की नीलिमा से नीला हो गया था। हे राजन्! आपके यश से वह पुनः अपने स्वाभाविक श्वेतरूप वाला हो गया। यहाँ आये हुए दूसरे के गुण को त्यागकर अपने गुण का वर्णन किया गया है इसलिए यहाँ पूर्वरूपता नामक अलंकार हुआ ॥ १०२ ॥

**यद्वस्तुनोऽन्यथा रूपं तथा स्यात्पूर्वरूपता ।**
**दीपे निर्वापिते ह्यासीत्काञ्चीरत्नैरहर्महः ॥ १०३ ॥**

पूर्वरूपता तूच्छेद इत्याह—**यदिति**। पूर्ववस्तुनोऽन्यथारूपं तथा स्यात् पुनर्भवति तत्र पूर्वरूपतेत्यर्थः। **दीप इति**। अत्र नष्टस्योद्योतनस्य पुनरुद्गमः ॥ १०३ ॥

**अन्वयः**—वस्तुनः यद् रूपम् अन्यथा ( तत् ) तथा स्यात् ( तत् ) पूर्वरूपता ( मता ) ( उदाहरति ) दीपे निर्वापिते ( सति ) हि काञ्चीरत्नैः अहर्महः आसीत् ।

**व्याख्या**—पूर्वरूपतायाः प्रकारान्तरमाह—वस्तुन इति। वस्तुनः=पदार्थस्य यद् रूपम् अन्यथा उच्छिन्नरूपम् वस्तु पुनस्तद्रूपं तथा पूर्ववदेव स्यात् तदा पूर्वरूपता ज्ञेया। उदाहरति—दीपे इति। दीपे=प्रदीपे निर्वापिते=शान्ति नीते अपि काञ्च्याः=रशनायाः रत्नैः=मणिभिः अहर्महः=अह्नो दिवसस्य महः=प्रकाशः आसीत्। अत्र वस्तुनः दीपस्य प्रकाशरूपे निर्वाणादुच्छिन्नेपि काञ्चीमणिकिरणैः पुनस्तत्प्रकाशकथनात् पूर्वरूपता अलंकारः। पूर्व पूर्वरूपतायाः न गुणोच्छेदः किन्तु तस्यान्यथाभावः। अत्र तु तस्योच्छेद एवेत्यनयोर्भेदः।

**हिन्दी**—किसी पदार्थ का रूप नष्ट हो जाने पर भी पूर्वरूपता अलंकार होता है। जैसे—दीपक के बुझ जाने पर भी नायिका की करधनी के रत्नों से दिन-सा प्रकाश हुआ। यहाँ दीपक के नष्ट हो जाने पर भी उससे होनेवाला प्रकाशरूप कार्य रत्नों से सम्पन्न हुआ। इसलिए यह पूर्वरूपता अलंकार हुआ ॥ १०३ ॥

**सङ्गतान्यगुणानङ्गीकारमाहुरतद्गुणम् ।**
**चिरमपि स्वैर्मध्यं शीत एव सदा शशी ॥ १०४ ॥**

संसर्गेऽपि परगुणाऽग्रहणेऽतद्गुणः। यथा चन्द्रस्य सूर्याश्रयेऽपि तापाऽग्रहणे—इत्याह—सङ्गतेति ॥ १०४ ॥

अन्वयः—सङ्गतान्यगुणालंकारम् अतद्गुणमाहुः। (आचार्याः) रवेः मध्ये विशत् अपि शशिः सदा शीत एव।

व्याख्या—अतद्गुणमाह—सङ्गतेति। अन्यस्य पदार्थस्य गुणाः अन्यगुणाः सङ्गताः प्रसक्ताश्च ते अन्यगुणा सङ्गतान्यगुणाः। तेषामनङ्गीकारं=अस्वीकारम् अतद्गुणालंकारमाहुः = कथयन्ति साहित्यिकाः। संसर्गेऽपि स्पष्टगुणग्रहणम् तदिति भावः। उदाहरति–विशन्तीति। रवेः=सूर्यस्य मध्ये=अन्तः विशन् = प्रवेशं कुर्वाणोऽपि शशी=चन्द्रः शीतः=शिशिर एव। इदं तयोरेकराशिस्थितत्वे प्रत्यमावस्याम् भवति। स्वभावतः उष्णरश्मेः सम्बन्धेऽपि चन्द्रमसस्तदोयोष्णताऽग्रहणात् अतद्गुणालंकारः।

हिन्दी—जहाँ अन्य पदार्थ के संसर्ग करने पर भी उसके गुण का ग्रहण न करना वर्णित हो वहाँ अतद्गुण अलंकार होता है। जैसे—एक राशिस्थ होने के कारण सूर्य के सान्निध्य होने पर भी चन्द्रमा उसके उष्णता रूप गुण को नहीं ग्रहण करता है, सदा शीत ही रहता है। यहाँ पर अन्य का संसर्ग होने पर भी उसके गुण का ग्रहण न करना वर्णित है अतः यहाँ अतद्गुण अलंकार हुआ ॥

प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसन्निधेः।
कर्णोत्पलानि दधते कटाक्षैरपि नीलताम् ॥ १०५ ॥

परसन्निधानात्सिद्धस्य स्वगुणस्योत्कर्षवर्णनेऽनुगुणः। कटाक्षरुचाऽवतंसीकृतानां नीलोत्पलानामिवेत्याह प्रागिति ॥ १०५ ॥

अन्वयः—परसन्निधेः प्राक्सिद्धस्वगुणोत्कर्षः अनुगुणः अलंकारः (भवति उदाहरति) कर्णोत्पलानि कटाक्षैरपि नीलतां दधते।

व्याख्या—प्राक्सिद्धेति। परसन्निधेः=अन्यसामीप्यात् प्राक्सिद्धस्य = पूर्वस्थितस्यैव स्वगुणोत्कर्षः=आधिक्यम् अनुगुणोऽलंकारः। उदाहरति—कर्णोत्पलानीति। नीलानि कर्णोत्पलानि कटाक्षैरपि नीलताम् = नीलतोत्कर्षं दधते=धारयन्ति। अत्र कर्णावतंसीकृतनीलकमलानां नीलिमोत्कर्षवर्णनात् प्राक्सिद्धस्वगुणोत्कर्षवर्णनात् अनुगुणालंकारः।

हिन्दी—किसी दूसरे के सम्बन्ध से अपने गुण की वृद्धि को अनुगुण कहते

हैं। 'कर्णोत्पलानि' इसका उदाहरण है। कान में लगाये गये नीले रंग के कमल कटाक्षों से अधिक नीलता को प्राप्त करते हैं। यहाँ नीले कमलों में कटाक्षों के कारण अधिक नीलता बताने के कारण अनुगुण अलंकार है॥ १०५॥

अवज्ञा वर्ण्यते वस्तु गुणदोषाक्षमं यदि।
म्लायन्ति यदि पद्मानि का हानिरमृतद्युतेः॥ १०६॥

यत्राऽस्मिन् सत्यपि नेतरस्य किमपीति वर्ण्यते तत्राऽवज्ञा। यथा चन्द्रोदये सत्यपि कमलम्लानावपि न चन्द्रमसः किमपीत्यत्रेत्याह—अवज्ञेति। अत्र पद्मम्लान्या चन्द्रे न गुणो न दोषः॥ १०६॥

अन्वयः— यदि गुणदोषाक्षमं वस्तु वर्ण्यते तदा अवज्ञा (ज्ञेया) (उदाहरति) यदि पद्मानि म्लायन्ति अमृतद्युतेः का हानिः।

व्याख्या—अवज्ञालंकारमाख्याति—अवज्ञेति। यदि गुणदोषयोः अक्षमम् गुणदोषाक्षमम्=गुणदोषानर्हं वस्तु वर्ण्यते=कथ्यते तदा अवज्ञालङ्कारः। यदा अन्यगुणदोषाभ्यामन्यत्रगुणदोषौ न स्याताम् तदावज्ञा अयमलंकारः=उल्लासालङ्कारविपर्ययः। उदाहरति—यदि पद्मानि। यदि पद्मानि=कमलानि चन्द्रम्=शशिनम् दृष्ट्वा=अवलोक्य म्लायन्ति = सङ्कोचमञ्चन्ति तदा अमृतद्युतेः = चन्द्रस्य का हानिः = का क्षतिः तस्य सर्वेषामाह्लादजनकत्वात् अमृतद्युतित्वानपायात्' अत्र मुकुलीभावः पद्मदोषः तेन पद्मदोषेण चन्द्रस्य दोषालाभात् अवज्ञालंकारः।

हिन्दी—जहाँ किसी के गुण अथवा दोष से दूसरे का लाभ या हानि न हो वहाँ अवज्ञा अलङ्कार होता है। 'म्लायन्ति' यह श्लोकार्ध इसका उदाहरण है। यदि चन्द्रमा को देखकर कमल संकुचित हो जाते हैं तो इसमें अमृतद्युति की क्या हानि है। उसके अमृतद्युतित्व में कोई फरक नही पड़ता। वह सारे जगत् का आह्लादक बना ही रहता है। यहाँ पद्म के दोष से चन्द्रमा के शैत्य भाव वर्णन से अवज्ञा अलङ्कार हुआ॥ १०६॥

प्रश्नोत्तरं क्रमेणोक्तौ स्यूतमुत्तरमुत्तरम्।
यत्राऽसौ वेतसी पान्थ तत्रासौ सुतरा सरित्॥ १०७॥

प्रश्नोत्तरयोर्यत्र क्रमेणोक्तौ उत्तरं निबध्यते तत्रोत्तरमलङ्कारः। तेन व्युत्क्रमनिबन्धे नाऽलङ्कार इति प्राप्तम्। यथेयं नदी ह्यसुतरेति पान्थप्रश्ने यत्रेत्यादिरुत्तरमित्याह—प्रश्नेति। अत्र सङ्केतस्थलमपि तया कथितमिति

तस्यापि जिज्ञासायामुत्तरं दत्तम् । अपि च स्यूतमित्यनेन क्रमोक्तौ व्यवधानाभाव उक्तस्तेन व्यवधानेनाक्तौ नोत्तरालङ्कार इति सूचितम् । स्यूतमित्युत्तरेण सम्बद्धं यथोदाहृत एवोत्तरद्वयप्रतीताविति कश्चित् । १०७ ॥

अन्वयः—उक्तौ क्रमेण उत्तरमुत्तरं स्यूतं तत्र प्रश्नोत्तरालङ्कारः ( भवति । उदाहरति—) पान्थ ! यत्रासौ वेतसी तत्र सरित् सुप्रतरा ।

व्याख्या—प्रश्नोत्तरालङ्कारमाह—तयोः प्रश्नोत्तरयोरुक्तौ = कथने = क्रमेण उत्तरमुत्तरं यावत् । अग्रे इति भावः । उत्तरम् = प्रतिवचनम् । स्यूतम्=संलग्नम् तत्र प्रश्नोत्तरालङ्कारः । उदाहरति—यत्रेति । हे पान्थ ! = पथिक यत्र=यस्मिन् स्थले असौ दृश्यमाना वेतसी = वानीरवृक्षः तत्र=तस्मिन् स्थले सरित्=नदी, सुप्रतरा=सुखेन तरितुं योग्या । सरित्तरणमार्गं पृच्छन्तं पान्थं प्रति यत्रासौ वेतसी इत्युत्तरम् । अत्र पान्थस्य सरित्तरणमार्गं उन्नीयते । अत्रेदमाकूतम् । कामुकः पान्थः संकेतस्थलं पप्रच्छ तदुत्तरे वेतसीलतामण्डपसंकेतस्थलं कामयमाना कामिनी कथितवतीत्यङ्गीकाररूपं उत्तरं ज्ञेयम् ।

हिन्दी—प्रश्नोत्तर वाक्य में जहाँ छिपे प्रश्नों का उत्तर दिया जाय वहाँ प्रश्नोत्तरालङ्कार होता है । उदाहरण—जहाँ वह बेंत का वृक्ष है वहाँ नदी का उतार है । पान्थ का प्रश्न 'नदी कहाँ आसानी से पार की जा सकती है' यह जाना जाता है किन्तु यहाँ कान्तारमणाभिलाषी पान्थ के संकेतस्थल की जिज्ञासा रूप प्रश्न का उत्तर भी छिपा है । हे पान्थ ! जहाँ बेत का कुञ्ज है वही संकेतस्थल निश्चित जानना यह कामिनी की स्वीकारोक्ति है ॥ १०७ ॥

**पिहितं परवृत्तान्तज्ञातुरन्यस्य चेष्टितम् ।**
**प्रिये गृहागते प्रातः कान्ता तल्पमकल्पयत् ॥ १०८ ॥**

परवृत्तज्ञानोत्तरं कस्यचिच्चेष्टा पिहितम् । यथा नायकस्य निशायामन्यकामिन्यनुरक्तस्य प्रातरागमने तज्ज्ञात्वा कान्तायास्तल्परचनं तत्र तव जागरणं ज्ञातमिदानीं शयनं कुर्वित्यभिप्रायेणेत्याह—पिहितमिति । नाऽहं त्वच्चरिताऽनभिज्ञेति तथाचेष्टाया आशयः ॥ १०८ ॥

अन्वयः—परवृत्तान्तज्ञातुः अन्यस्य चेष्टितम् पिहितम् ( भवति । उदाहरति—) प्रातः गृहागते प्रिये कान्ता तल्पम् अकल्पयत् ।

**व्याख्या**—पिहितालङ्कारमाह—पिहितमिति । परस्य = इतरस्य वृत्तान्तस्य = समाचारस्य ज्ञाता = अभिज्ञः तस्य परवृत्तान्वज्ञातुः अन्यस्य=इतरस्य चेष्टितम् = परकीयवृत्तान्तज्ञानानुरूपा क्रिया पिहितं = पिहितनामालङ्कारः । परवृत्तान्तज्ञानपूर्वकं तदनुगुणक्रियाकथनम् पिहितम् । उदाहरति—प्रिय इति । प्रातः=प्रत्यूषसि प्रिये = प्रियतमे गृहागते = गेहमायाते कान्ता=पत्नी तल्पम् = शैय्याम् अकल्पयत् । अन्यस्यां गृहे कृतजागरणः त्वं श्रान्तोऽसि साम्प्रतमस्मिन् सुखशयने निःशङ्कं स्वपिहीति तात्पर्यम् । अत्र रात्रौ श्रान्तः साम्प्रतं सुसुप्सुरयमिति प्रियस्य सपत्नीसंगमं बुध्यमानायाः परवृत्तान्तज्ञातिपूर्वकं तदनुकूलतल्पकल्पनाया चेष्टायाः प्रतिपादनात् पिहितालङ्कारः ।

**हिन्दी**—दूसरे के वृत्तान्त को अपनी क्रिया द्वारा प्रकट करने को पिहितालंकार कहते हैं। जैसे—प्रातःकाल अपने प्रिय के घर लौट आने पर उसकी कांता ने शय्या लगा दी । उसने अपनी क्रिया से यह प्रकट किया कि आप मेरी सौत के यहाँ सारी रात बिताकर आये हैं और अधिक थक गये हैं अतः सुखपूर्वक सोकर थकावट को दूर करिये । यहाँ प्रिय के इस गूढ़ रहस्य को कांता ने शय्या बिछाकर प्रकट किया ॥ १०८ ॥

**व्याजोक्तिः शङ्कमानस्य छद्मना वस्तुगोपनम् ।**
**सखि पश्य गृहारामपरागैरस्मि धूसरा ॥ १०९ ॥**

परभीत्या यत्र व्याजेन वास्तवमर्थं गोपयति तत्र व्याजोक्तिः । यथा चौर्यरते वृत्तस्य भूधूलिसम्बन्धस्य सखीत्यादिना गोपनम् । ममैते शरीरे परागा इत्युक्त्या धूलिशङ्कानिवारणादित्याह—व्याजोक्तिरिति ॥ १०९ ॥

**अन्वयः**—शङ्कमानस्य छद्मना वस्तुगोपनम् व्याजोक्तिः (भवति। उदाहरति—) सखि ! गृहारामपरागैः धूसरा अस्मि पश्य ।

**व्याख्या**—व्याजोक्तिमाचष्टे—व्याजोक्तिरिति । शङ्कमानस्य = रहस्यमाकलयतः छद्मना = वचनचातुरीतः, कपटेन वस्तुनः = यथार्थवृत्तस्य गोपनम् = गूहनम् व्याजोक्तिः । व्याजेन छद्मना उक्तिः अन्यथा शङ्कमानं प्रति अन्यथा कथनद्वारा यथार्थगोपनं व्याजोक्तिः । उदाहरति—सखि । धूलिधूसरां सखीं दृष्ट्वा चौर्यरतं शङ्कमानां सखीं प्रति कामिन्या उक्तिरियम् । हे सखि ! अहम् गृहारामपरागैः = गृहवाटिकाधूलिभिः धूसरा = मलिना जाता इति त्वं पश्य । संकेतस्थलीलुण्ठन-

मलिना नास्मि । अत्र चौर्यरतं शङ्कमानां सखीं नायिकायाः गृहारामेति छद्मोक्त्या व्याजोक्तिरलङ्कारः ।

हिन्दी—गुप्त बात के प्रकट हो जाने की आशंका से कपट से उसके छिपाने को व्याजोक्ति नामक अलंकार कहते हैं । जैसे—हे सखि ! घर की फुलवारी की ( सफाई करने से कैसी ) धूल से मलिन हो गयी हूँ । किसी नायिका ने गुप्तसम्भोग के कारण धूलिधूसिरता को देख कर शंका करते हुए नायक को सुनाकर नायिका अपनी सखी से कहती है इसलिए यहाँ व्याजोक्ति अलंकार हुआ ॥ १०९ ॥

**वक्रोक्तिः श्लेषकाकुभ्यां वाच्यार्थान्तरकल्पनम् ।**
**मुञ्च मानं दिनं प्राप्तं मन्द नन्दी हरान्तिके ॥ ११० ॥**

श्लेषमहिम्ना काकुमहिम्ना वा यत्र वाच्यार्थान्तरं कल्प्यते तत्र वक्रोक्तिः । यथा—मुञ्च मानं दिनं प्राप्तमिति । मानं मुञ्च दिनं प्राप्तमित्यभिप्रायेण कान्तेनोक्ते कान्ता श्लेषेण दिनं प्राप्तं मा मुञ्चेत्यर्थं कल्पयित्वा प्राह हे मन्द मम न नन्दिनः प्राप्तिः, क्व पुनः ? स हरान्तिके इत्याह—वक्रोक्तिरिति । एवं काक्वापि द्रष्टव्यम् ॥ ११० ॥

अन्वयः—श्लेषकाकुभ्यां वाच्यार्थान्तरकल्पनम् वक्रोक्तिः ( भवति उदाहरति ) दिनं प्राप्तं मानं मुञ्च । मन्द ! नन्दी हरान्तिके अस्ति ।

व्याख्या—वक्रोक्त्यलंकारं ब्रूते—वक्रोक्तिरिति । श्लेषश्च काकुश्चेति श्लेषकाकुः ताभ्यां श्लेषकाकुभ्याम्=द्व्यर्थकपदात् ध्वनिविकाररूपात् काकोर्वा अन्योर्थः वाच्यादर्थान्तरं तस्य कल्पनम्=अभिधेयात् अन्यार्थरचनम् । वक्रोक्तिः=एतन्नामालंकारः । उदाहरति—मुञ्चेति । कश्चित् कान्तः मानिनीमनुनयन्नाह—हे प्रिये ! दिनम्=दिवसः प्राप्तम्=आगतम् दिवसो जातः । मानम्=क्रोधम् मुञ्च=त्यज=जहीहि इत्युक्ता नायिका प्रियोक्तवाक्यस्य उक्तादर्थादन्यत् अर्थम् श्लेषेण आगतम् नन्दिनं तन्नामकं शिववृषभं मा मुञ्चेत्यर्थं परिकल्प्य उक्तवती—हे मन्द ! मूढ असौ त्वयोक्तो नन्दी हरान्तिके शिवसन्निधावस्ति । मत्समीपमनागतस्य कथं त्यागं ब्रवीषि ? अत्रसभङ्गश्लेषेणार्थान्तरकल्पनात् श्लेषवक्रोक्तिः ।

हिन्दी—जहाँ श्लेष अथवा काकु से दूसरे अभिप्राय से कहे हुए वाक्य का दूसरा अर्थ कर लिया जाय वहाँ वक्रोक्ति अलंकार होता है । इस तरह इसके दो भेद हैं—श्लेषमूला वक्रोक्ति और काकुमूला वक्रोक्ति । उसमें पहले श्लेष-

मूला का उदाहरण देते हैं—मुञ्च मानं। कोई नायक मानिनी नायिका को मनाता हुआ कहता है—हे प्रिये ! दिन आ गया अब भी तो मान छोड़ो। नायक के ऐसा कहने पर नायिका पूर्वोक्त अर्थ वाले उसके वाक्य का सभङ्गश्लेष द्वारा आये हुए नन्दी को मत छोड़ो ऐसा तात्पर्य लगाकर उत्तर देती है-हे मूढ ! शङ्कर का वृषभ नन्दी तो शङ्कर के पास है, मेरे द्वारा उसके त्याग की प्रार्थना क्यों करते हो, जो मेरे पास आया ही नहीं उसका त्याग कैसे किया जा सकता है। यहाँ पर पति के अन्यार्थक वाक्य का श्लेष द्वारा दूसरा अनभिप्रेत अर्थ करने से वक्रोक्ति अलंकार हुआ ॥ ११० ॥

स्वभावोक्तिः स्वभावस्य जात्यादिषु च वर्णनम्।
कुरङ्गैरुत्तरङ्गाक्षि स्तब्धकर्णैरुदीक्ष्यते ॥ १११ ॥

स्वभावो यत्राऽश्वादेर्वर्ण्यते तत्र स्वभावोक्तिः। यथा कुरङ्गैरित्यादौ मृगस्वभाववर्णनमित्याह—स्वभावेति ॥ १११ ॥

**अन्वयः**—जात्यादिषु च स्वभाववर्णनम् स्वभावोक्तिः ( भवति। उदाहरति—) हे उत्तरङ्गाक्षि ! स्तब्धकर्णैः कुरङ्गैः उदीक्ष्यते।

**व्याख्या**—स्वभावोक्त्यलंकारं व्याचष्टे—स्वभावोक्तिरिति। जात्यादिषु = हरिणत्वादिषु यत् स्वभावस्य क्रियारूपादेः वर्णनम् तत् स्वभावोक्तिः एतन्नामकः अलङ्कारः। स्वभावस्य स्वाचरणस्योक्तिः स्वभावोक्तिः। उदाहरति—कुरङ्गैरिति। उत्तरङ्गे = तरङ्गचपले अक्षिणी नेत्रे यस्याः सा उत्तरङ्गाक्षि = चपलनयने, स्तब्धौ कर्णौ येषान्ते तैः स्तब्धकर्णैः = निश्चलश्रोत्रैः कुरङ्गैः = मृगैः उदीक्ष्यते = दृश्यते। मृगाः स्तब्धकर्णाः विलोकयन्तीति तेषां जातिस्वभावः। तद्वर्णनाद् अत्र स्वभावोक्तिरलंकारः।

**हिन्दी**—किसी पदार्थ के स्वाभाविक क्रिया या रूप का वर्णन किया जाय वहाँ स्वभावोक्ति अलंकार होता है। जैसे—हे चञ्चल नयनवाली ! देखो मृग निश्चल कर्ण वाले होकर देख रहे हैं। यहाँ निश्चलकर्ण होकर देखना मृगों का जातिगत स्वभाव है। उसके वर्णन के कारण यहाँ पर स्वभावोक्ति अलंकार हुआ ॥ १११॥

भाविकं भूतभाव्यर्थं साक्षाद् दर्शनवर्णनम्।
अलं विलोकयाद्यापि युद्ध्यन्तेऽत्र सुरासुराः ॥ ११२ ॥

यत्र भूतस्य भाविनो वाऽर्थस्य साक्षात्कारो वर्ण्यते तत्र भाविकम्। [रणभूमे]ा भीषणतोपवर्णनायाऽतीतयुद्धप्रेक्षणवर्णनमित्याह–भाविकमिति ।११२।

अन्वयः—भूतभाव्यर्थं साक्षाद् दर्शनवर्णनं भाविकम् ( भवति। उदाहरति—) [अत्र] सुरासुरा अद्यापि युद्धयन्ते ( इति त्वम् ) अलं विलोकय।

व्याख्या—भाविकालङ्कारमाह—भाविकमिति। भूताः=अतीताः भाविनः=[आ]गामिनश्च ते भूतभाविनः तथाभूताः ये अर्थाः तेषां साक्षाद् दर्शनस्य=प्रत्यक्षवद-[वल]ोकनस्य वर्णनम्=कथनम् भाविकम्। भावः कवेरभिप्रायो यत्रास्ति तत्र भाविक-मालङ्कारः भवति। उदाहरति–अत्र स्थाने सुराश्च असुराश्च सुरासुराः देवासुराः [अद्य] अपि इदानीमपि युद्ध्यन्ते युद्धं कुर्वन्ति त्वं अलं पर्याप्तं विलोकय पश्य। अत्र [रण]भूमेर्भीषणतां प्रदर्शनाय अतीतदेवासुरयुद्धस्य साक्षाद्दर्शनवर्णनमस्ति।

हिन्दी—भूत और भावी पदार्थों के प्रत्यक्ष रूप से वर्णन को भाविक अलंकार [कह]ते हैं। जैसे—इस रणभूमि में आज भी सुर-असुर लड़ रहे हैं, तुम देखो! यहाँ [रण]भूमि की भीषणता को बताने के लिए बीते हुए देवासुर-संग्राम को वर्तमान [बता]या गया है। यहाँ अतीत के वर्णन का प्रत्यक्ष को तरह वर्णन किये जाने के [का]रण भाविक अलंकार है॥ ११२॥

देशात्मविप्रकृष्टस्य दर्शनं भाविकच्छविः।
त्वं वसन् हृदये तस्याः साक्षात्पञ्चेषुरीक्ष्यसे॥ ११३॥

यत्र देशविप्रकृष्टस्याऽऽत्मविप्रकृष्टस्य च साक्षात्कारो वर्ण्यते तत्र [भा]विकच्छविः। यथा विप्रकृष्टां नायिकामुद्दिश्य नायकं प्रति दूतीवचनम्–[त्वं] वसन्नित्यादीत्याह–देशेति॥ ११३॥

अन्वयः—देशात्मविप्रकृष्टस्य दर्शनं भाविकच्छविः ( भवति। उदाहरति— ) [तस्]याः हृदये वसन् त्वं साक्षात् पञ्चेषुः ईक्ष्यसे।

व्याख्या—भाविकच्छविनामकमलङ्कारं ब्रूते—देशमिति। देशेन=स्थलेन [आ]त्मना=स्वरूपेण विप्रकृष्टस्य=दूरस्थितस्य दर्शनम्=प्रत्यक्षवदवलोकनवर्णनम् [भा]विकच्छविः एतन्नामालकारो भवति। उदाहरति—त्वमिति। नायकं प्रति दूती-[वाक्]यम्। त्वम्=भवान् तस्याः=नायिकायाः हृदये=मानसे वसन्=अवतिष्ठ-[मान]ः साक्षात्=प्रत्यक्षम् पञ्चेषुः=कामः इव ईक्ष्यसे=दृश्यसे। अत्र देशेन आत्मना च

दूरस्थितायाः नायिकायाः हृदये दूरस्थितस्य नायकस्य कामाभिन्नतया दर्शनवर्णनम् भाविकच्छविनामालङ्कारः ।

हिन्दी—जहाँ देश की अपेक्षा अथवा आत्मा की अपेक्षा दूर रहनेवाले पदार्थ का दर्शन वर्णन किया जाय वहाँ भाविकच्छवि अलंकार होता है। जैसे—नायक के प्रति दूती की उक्ति है कि उस नायिका के हृदय में निवास करते हुए आप साक्षात् कामदेव की तरह दिखाई देते हैं। यहाँ देश और स्वरूप से दूरस्थ नायिका के हृदय में वर्तमान नायक का कामदेव की तरह साक्षात् दर्शन का वर्णन किया गया है इसलिए यहाँ भाविकच्छवि अलंकार हुआ ॥ ११३ ॥

उदात्तमृद्धेश्चरितं श्लाघ्यं चान्योपलक्षणम् ।
सानौ यस्याभवद्युद्धं तद्धूर्जटिकिरीटिनोः ॥ ११४ ॥

सम्पदत्युक्तिरुदात्तम् । अन्यस्योपलक्षणं श्लाघ्यं चरितं चोदात्तम् । यथा रुद्रपार्थयोर्युद्धं सानुमतः कस्यचिदुपलक्षणमित्याह—उदात्तमिति ॥ ११४ ॥

अन्वय—ऋद्धेः श्लाघ्यम् अन्योपलक्षणम् चरितं च वर्ण्यते (तत्र तत्र) उदात्तम् (भवति । उदाहरति) यस्य सानौ धूर्जटिकिरीटिनोः तद् युद्धम् अभवत् ।

व्याख्या—उदात्तालङ्कारं व्याचष्टे—श्लाघ्या=प्रशस्या ऋद्धेः = सम्पदः उदात्तम्=श्लाघ्यम् चरितम्=वृत्तम् च अन्यस्य=इतरस्य उपलक्षणमङ्गं स्यात् तदप्युदात्तम् । सम्पदाधिक्यवर्णनमेकमुदात्तम् । महतां चरितस्यान्याङ्गत्वं द्वितीयमुदात्तम् । अत्र द्वितीयमुदाहरति—सानाविति । यस्य=हिमालयस्य सानौ = शिखरे धूसरिभूता जटा यस्य सः धूर्जटिः = शंकरः किरीटी = अर्जुनः तौ धूर्जटिकिरीटिनौ तयोः धूर्जटिकिरीटिनोः तत्=महाभारतप्रसिद्धयुद्धम् अभवत्=भवति स्म । अत्र महतो धूर्जटिकिरीटिनोर्युद्धस्य हिमालयवर्णनाङ्गत्वात् उदात्तनामालङ्कारः ।

हिन्दी—सम्पत्ति की अधिकता के वर्णन में या जहाँ बड़ों का किसी का अङ्ग बना कर वर्णन हो वहाँ उदात्त अलंकार होता है। इस तरह इस अलंकार के दो भेद हुए। उनमें से दूसरे का उदाहरण देते हैं। जैसे—जिस हिमालय के शिखर पर भगवान् शंकर और अर्जुन का महाभारतप्रसिद्ध युद्ध हुआ था। यहाँ पर शंकर जी और अर्जुन के युद्ध को हिमालयवर्णन का अङ्ग बना दिया गया है इसलिए उदात्तालंकार हुआ ॥ ११४ ॥

अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम् ।
त्वयि दातरि राजेन्द्र याचकाः कल्पशाखिनः ॥ ११५ ॥

अद्भुतस्य सामर्थ्यस्य शौर्यादिवर्णनमत्युक्तिः । यथा कल्पशाखिनोऽपि त्वां याचन्ते इति दीनाऽत्युक्तिरित्याह—अत्युक्तिरिति ॥ ११५ ॥

**अन्वयः**—अद्भुतातथ्यशौर्यादिवर्णनम् अत्युक्तिः ( भवति उदाहरति ) हे राजेन्द्र ! त्वयि दातरि कल्पशाखिनः ( अपि ) याचकाः ।

**व्याख्या**—अत्युक्त्यालङ्कारं व्याचष्टे–अत्युक्तिरिति । अद्भुतम्=आश्चर्यजनकम् अद्भुतञ्च तदतथ्यम्=असत्यम् अद्भुतातथ्यम् शौर्यं=वीरता औदार्यं=दातृभावः ते आदौ येषां ते शौर्यौदार्यादयः तेषां वर्णनम् अत्युक्तिरलङ्कारः । उदाहरति—त्वयीति । हे राजन्! त्वयि=भवति दातरि=दानपरायणे सति कल्पशाखिनः = कल्पाख्या देवतरवः अपि याचकाः=याञ्चाकर्तारो जाताः । निखिलाभीष्टदायिनोऽपि त्वां याचन्ते । अथवा याचका अपि कल्पवृक्षाः जाताः । अत्र राज्ञो वदान्यत्वे याचका अपि कल्पवृक्षसदृशो दातारो जाताः । राज्ञो मिथ्यौदार्योक्तिः । याचकानां कल्पवृक्षसदृशवदान्यत्वाभावे अत्युक्तिरलङ्कारः ।

**हिन्दी**—अद्भुत, असत्य, वीरता या उदारता का वर्णन अत्युक्ति अलंकार होता है । उदाहरण—जैसे आपके दानपरायण होने पर कल्पवृक्ष भी याचक बन गये अथवा याचक भी याञ्चालब्ध धन से कल्पवृक्ष ( दूसरे की कामना को पूरा करनेवाले ) हो गये । यहाँ असत्य औदार्य का वर्णन होने से अत्युक्ति अलंकार हो गया । वीरता का असत्य वर्णन जैसे—

'राजन् सप्ताप्यकूपाराः त्वत्प्रतापाग्निशोषिताः ।
पुनस्त्वद्वैरिवनितावाष्पपूरेण पूरिताः ॥'

यहाँ अद्भुत असत्य का वर्णन है । तुम्हारे प्रताप से सातों समुद्र सूख गये थे किन्तु तुम्हारे वैरिवनिताओं के रोदनजन्य अश्रुओं से फिर वे भर गये ( इसी से खारे हैं ) ॥ ११५ ॥

रसभावतदाभासभावशान्तिनिबन्धनाः ।
रसवत्प्रेयऊर्जस्विसमाहितमयाभिधाः ॥ ११६ ॥
भावानामुदयः सन्धिः शबलत्वमिति त्रयः ।
अलङ्कारानिमान् सप्त केचिदाहुर्मनीषिणः ॥ ११७ ॥

**रसादिवर्णने चत्वारो रसवदादयोऽलङ्कारा: । भावोदयादिवर्णने च त्रय इति पूर्वोक्तव्यतिरिक्ताः सप्ताऽलङ्काराः सन्तीति केषांचिन्मतमाह—रसेति ॥ ११६-११७ ॥**

**अन्वयः**—रस-भाव-तदाभास-भावसन्धिनिबन्धनाः रसवत्प्रेयऊर्जस्वित्समाहितमयाभिधाः ( चत्वारः अलङ्काराः भवन्ति ) भावनाम् उदयः सन्धिः सवलत्वम् इति त्रयः ( गणनया ) इमान् सप्त अलङ्कारान् केचित् मनीषिणः आहुः ।

**व्याख्या**--केचिदालंकारिकैर्वक्ष्यमाणा अपि रसवदादयः सप्तालङ्काराः अलङ्कारेषु परिगणिताः । अतस्तानि श्लोकद्वयेन ब्रवीति---तत्रादौ रसवदादीन् चतुरोऽलङ्कारान् निरूपयति—रसभावेति । रसाः = शृङ्गारादयः भावाः = निर्वेदादयः त्रयस्त्रिंशत् तयोः रसभावयोराभासाः रसाभासाः भावाभासाश्च भावसन्धिश्च रसभावतदाभासभावसन्धयः ताः निबन्धनानि हेतवः येषां ते तथाभूताः । रसवांश्च प्रेयांश्च ऊर्जस्विच्च समाहितश्चेति रसवत्प्रेयऊर्जस्वित्समाहितमया अभिधा=नामानि येषां ते तथाभूताः । रसवत्प्रियऊर्जस्वितसमाहितरूपाख्याः अलङ्काराः भवन्ति । तथा च रसवदलङ्कारः प्रेयोलंकार ऊर्जस्विदलङ्कार समाहितालङ्कारश्च । इदं तात्पर्यम् यत्रैको रसः रसान्तरस्याङ्गं भावस्य वा अङ्गं भवति तदा रसोऽस्त्यस्मिन्निति व्युत्पत्त्या रसवदलङ्कारः । उदाहरणं यथा महाभारते स्त्रीपर्वणि चतुर्विंशाध्याये—

'अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरूजघनस्पर्शी नीवीविस्रंसनः करः ॥

अत्र रणाङ्गणे मृतस्य पत्युः भूरिश्रवसः अर्जुनेन छिन्नं हस्तं दृष्ट्वा तद्भार्यायाः विलापः । शोकप्रकाशतया विद्यमानः करुणरसः पीनस्तनविमर्दनत्वाद् तत्काव्योद्दीपितेन विप्रलम्भशृङ्गारेण परिपोषं नीयते इत्यत्र शृङ्गारः करुणस्याङ्गम् । तेनात्र रसवदलङ्कारः । यत्र भावःअपरस्याङ्गं तत्र प्रेयोलङ्कारः । प्रकृष्टप्रियत्वात् प्रेयोलंकारः विभावादिपरिपुष्टास्त्रयस्त्रिंशद्भावाः मुनिगुरुराजविषया रतिश्च भाव इत्युच्यते । उदाहरणं यथा—

'कदा वृन्दारण्ये विमलयमुनातीरपुलिने,
चरन्तं गोविन्दं हलधरसुदामादिसहितम् ।
अये कृष्ण स्वामिन् मधुरमुरलीवादन विभो,
प्रसीदेत्याक्रोशन् निमिषमिव नेष्यामि दिवसान् ॥

वृन्दावने यमुनातीरपुलिने वसन्नहं कदा दिवसान्नेष्यामीति चिन्ताख्यो व्यभिचारिभावः शान्तरसस्याङ्गमिति प्रेयोलङ्कारः। यत्र रसः भावश्चानौचित्येन प्रवर्तितो भवति तत्र रसाभासः भावाभासश्च भवति।

ऊर्जस्विदुदाहरणं यथा—

वनेऽखिलकलासक्ताः परिहृत्य निजस्त्रियः।
त्वद्वैरिवनितावृन्दे पुलिन्दाः कुर्वते रतिम्॥

अत्र परस्त्रीसुरतवर्णनेन शृङ्गाराभासः स च राजरूपरतिभावस्याङ्गात् आभासरूप ऊर्जस्विदलङ्कारः।

भावाभासस्योदाहरणं यथा—

त्वयि लोचनागोचरं गते सफलं जन्म नृसिंह भूपते।
अजनिष्ट ममेति सादरं यदिविज्ञापयति द्विषां गणः॥

अत्र नृपविषयके रतिभावरूपभावस्य शत्रुनृपविषयकरतिभावरूपभावाभासः अङ्गम्। अत्र भावाभासस्य भावाङ्गतया द्वितीयऊर्जस्विदलङ्कारः।

भावस्य शाम्यदवस्था भावशान्तिः। अस्याः पराङ्गत्वे समाहितमलङ्कारः।

अस्योदाहरणम्—

अविरलबालकम्पनैः भृकुटी-तर्जनगर्जनैर्मुहुः।
ददृशे तव वैरिणां मदः स गतः क्वापि नवेक्षणे क्षणात्॥

अयं भावः—हे राजन्! तव वैरिणां मदः तव दर्शनादेव शान्तः। स च मदाख्यभावस्य शान्तिराजविषयकरतिभावस्याङ्गम्। इत्यत्र समाहितालंकारः। एवमत्र चत्वारोलंकाराः सोदाहरणा निरूपिताः। भात्रोदयादीन् त्रीनलंकारानाह—भावानामुदय इति। भावानामुदयः=उद्गमावस्था भावोदयः। द्वयोर्विरुद्धयोर्भावयोः सन्धिः भावसन्धिः। अनेकेषां भावानां शबलत्वम् संमिश्रत्वम् भावशबलता। एतेषां पराङ्गत्वे तदाख्याः अलंकारा भवन्ति। भावोदयस्य पराङ्गत्वे भावोदयः, भावसन्धेः पराङ्गत्वे भावसन्धिः, भावानां शबलत्वे भावशबलताख्योऽलंकारः भवति। तत्र भावोदय उदाह्रियते—

मधुपानप्रवृत्तास्ते सुहृद्भिस्तव वैरिणः।
श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां गतिम्॥

हे राजन्! त्वन्नाम श्रुत्वा तेऽरयः त्रस्ताः। अत्र त्रासभावोदयः। राजविषयकरतिभावस्याङ्गम्। अत्र भावोदयोऽलंकारः।

भावसन्धेरुदाहरणम्—

जन्मान्तरीणसुभगस्याङ्गसङ्गसमुत्सुका ।
सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा ।।

अत्र औत्सुक्यलज्जाख्यभावयोः सन्धिः । पार्वतीविषयकरतिभावस्याङ्गम् ।

भावशबलता उदाह्रियते—

पश्येत् कश्चित् चलचपल रे का त्वराऽहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढभवद् विद्विषोऽरण्यवृत्तेः
कन्या काचित् कलकिसलयात्याददानामवत्ते ।।

अत्र शंका-असूया-धृति-स्मृति-श्रम-दैन्य-विबोधौत्सुक्यानां भावानां शबलता राजविषयकरतिभावस्याङ्गमिति भावशबलताख्योऽलंकारः । एते सप्तालंकाराः कैश्चित् प्राक्तनैरालंकारिकैः स्वीकृताः अलंकारत्वेन न तु सर्वैः । यतः किलालंकाराणां शब्दार्थोभयोपकारजननद्वारा रसोपकारकत्वं रसादेश्चोपकार्यत्वम् । विविधानि मतानि विचार्य जयदेवेन केचिदिति पदेनेषामलकारत्वं प्रतिपादितम् ।

हिन्दी—ग्रन्थकर्ता जयदेव के मत से अलंकारों का निरूपण हो गया । अब और आलंकारिकों के मत से गौण रूप से माने गये कुछ आवश्यक अलंकारों का निरूपण करते हैं । शृङ्गारादि रस, भाव, रसाभास, भावाभास और भावसन्धि एतन्मूलक रसवत्, प्रेय, ऊर्जस्वित् और समाहित नामक चार अलंकार कहते हैं । इसी तरह इनके अतिरिक्त भावोदय, भावसन्धि और शबलता नामक ये तीन और अलंकार होते हैं । इन सात अलंकारों का कुछ आलंकारिकों ने अपने-अपने ग्रंथों में प्रतिपादन किया है । रसवदादि अलंकारों का स्वरूप-निरूपण उदाहरण के साथ इस प्रकार है—जहाँ एक रस किसी दूसरे रस का अथवा भाव का अङ्ग बन जाय वहाँ रसवत् अलंकार होता है । 'अयं सरशनोत्कर्षी' यह उदाहरण रसवत् अलंकार का है । यहाँ मरे भूरिश्रवा के कटे हाथ को देखकर उसकी पत्नी कहती है—यह हाथ मेरे साथ केलि में व्यापृत था । यहाँ शृङ्गार रस का वर्णन करुण रस का अङ्ग है इसलिए रसवत् अलंकार हुआ । जहाँ एक भाव किसी दूसरे का अङ्ग बन जाय वहाँ प्रेय अलंकार होता है । निर्वेदादि तैंतीस सञ्चारी भाव [illegible] और [illegible] रतिभाव को भाव कहते हैं । 'कदा वृन्दा-

ण्ये' यह इसका उदाहरण है। मैं कब वृन्दावन में यमुना के तटवर्ती पुलिन पर घूमते हुए अपने मित्रों सहित श्रीकृष्ण को पुकारूँगा। यह चिन्तारूपी भावध्वनि, शान्त रस का अङ्ग है अतः प्रेय अलंकार हुआ। जहाँ रसाभास और भावाभास किसी के अङ्ग होकर अप्रधान हो जाय वहाँ ऊर्जस्वित् अलंकार होता है। अनुचित रूप से रस का वर्णन रसाभास और अनुचित रूप से भाव का वर्णन भावाभास होता है। 'वनेऽखिलकलासक्ता' यह ऊर्जस्वित् का उदाहरण है। यहाँ पर स्त्री के साथ सम्भोग के वर्णन से रसाभास है वह राजविषयक रतिभाव का अंग हो गया है—अतः ऊर्जस्वित् अलंकार हुआ। भावाभास के किसी के अंग होने पर ऊर्जस्वित् अलंकार का उदाहरण—जैसे यहाँ नृप विषयक रतिभाव का अंग शत्रुओं के मन में उस नृप के प्रति उत्पन्न रति है. वह शत्रुगत रति अनुचित है अतः भावाभास है। भावाभास के भाव का अंग होने के कारण यहाँ ऊर्जस्वित् अलंकार हुआ। जहाँ निर्वेदादि भावों में से किसी भाव की शान्ति किसी अन्य का बोधक हो वहाँ समाहित अलंकार होता है 'अविरलकरवाल' इसका उदाहरण है। हे राजन्! आपके दर्शन मात्र से शत्रुओं का मद शान्त हो गया। यहाँ मद रूप भाव के शान्ति राग रूप रति भाव का अंग होने के कारण समाहित अलंकार हुआ। इस तरह चारों अलङ्कारों का निरूपण हुआ। जहाँ भाव की उत्पत्ति दूसरे की पोषक बन कर अंग बन जाय भावोदय अलङ्कार होता है। जहाँ विरुद्ध दो भावों का एक साथ उदय हो और वह दूसरों का पोषक होकर अंग बन जाय तो वहाँ भावसन्धि अलङ्कार होता है। अनेक भावों के मिश्रण को भावशबलता कहते हैं। वह जहाँ किसी का पोषक होने के कारण अंग बन जाय तो वहाँ भावशबलता अलङ्कार होता है। 'मधुपानप्रवृत्तास्ते' यह भावशबलता का उदाहरण है। यहाँ राजा का नाम सुनते ही शत्रुगण भयभीत हो गये। यहाँ त्रास नामक भाव का उदय राजविषयक रतिभाव का अंग है अतः भावोदय हुआ। 'जन्मान्तरीणरमणस्याङ्ग' यह भावसन्धि का उदाहरण है। यहाँ सलज्जा पार्वती अपने जन्मान्तर के संगी भगवान् शंकर के आलिङ्गन के लिए उत्सुक है। यहाँ लज्जा और औत्सुक्य इन दो भावों की सन्धि का वर्णन पार्वती का उन्हीं के विषय के रतिभाव का अंग होने के कारण भावसन्धि अलङ्कार हुआ। 'पश्येत् कश्चित् चलचपल' यह भावशबलता का उदाहरण है। यहाँ शंका, असूया, धृति, स्मृति, श्रम, दैन्य, विबोध समय भावों की शबलता है वह राजविषयक रतिभाव का अंग है

अतः यहाँ भावशबलता अलङ्कार हुआ। इस प्रकार ऊपर दिखाये रसवत् आदि सात अलङ्कारों को कुछ विद्वान् नहीं मानते, क्योंकि रस स्वयं प्रधान रूप से रहता है। वह अप्रधान होकर किसी का अलङ्कार नहीं हो सकता। अतः प्राचीन आचार्यों ने ये अलङ्कार बताये हैं उन्हें गौण समझना चाहिये। मम्मट ने अपने काव्यप्रकाश में इनको गुणीभूत अलङ्कारों के अन्तर्गत माना है। इन सब मतों को देखकर चन्द्रालोकप्रणेता जयदेव ने इनका दिग्दर्शन मात्र करा दिया है।

शुद्धिरेकप्रधानत्वं तथा संसृष्टिसंकरौ।
एतेषामेव विन्यासान्नालङ्कारान्तराण्यमी ॥ ११८ ॥

यत्रैक एवाऽलङ्कारस्तत्र शुद्धिः एकप्रधानता। यत्र द्वयोरलंकारयोः सतोरेकस्य प्राधान्यं तिलतण्डुलन्यायेन स्फुटाऽनेकाऽलंकारता संसृष्टिः। नीरक्षीरन्यायेनाऽस्फुटाऽनेकालंकारता संकरः। एवमेते चत्वारोऽन्येऽलंकारा इति, तन्न। एते हि पूर्वोक्तानामेवाऽलंकाराणां विन्यासा न त्वलंकारान्तरमित्याह—शुद्धिरिति ॥ ११८ ॥

**अन्वयः**—शुद्धिः एकप्रधानत्वम् तथा संसृष्टिसंकरौ अमी (अलङ्काराः) एतेषामेव विन्यासात् अलङ्कारान्तराणि न (सन्ति)।

**व्याख्या**—शुद्ध्यादीनामलङ्कारान्तरत्वं निरूपयति—शुद्धिरिति। शुद्धिः एकप्रधानत्वं तथा संसृष्टिसंकरौ एतेषाम् = पूर्वोक्तानामलंकाराणां विन्यासात् = रचनाविशेषात् अमी = चत्वारः अलंकाराः अलंकारान्तराणि न भवन्ति। शुद्ध्यादयो हि पूर्वोक्तेष्वलंकारेष्वेवान्तर्भवन्ति न पृथग्भूताः विन्यासभेदेपि स्वरूपभेदाभावात्। यत्रैक एवालंकारस्तत्र शुद्धिः। द्वयोरलंकारयोर्यत्रैकः अलंकारः अन्योपपादकः तत्रैकप्रधानम्। तिलतण्डुलन्यायेन यत्र परपस्परस्यापेक्षाविरहेण शब्दार्थालंकाराणां पृथक्-पृथक् स्थितिः तत्र संसृष्टिशब्दालंकाराणामर्थालंकाराणामुभयेषाञ्च परस्परानपेक्षया स्थित्या त्रिविधैषा नीरक्षीरन्यायेन यत्र स्थितिः तत्र संकरः। अलंकाराणामङ्गाङ्गित्वे अङ्गाङ्गिभावसंकरः। एकाश्रयस्थितौ एकवाचकानुप्रवेशसंकरः। संदिग्धौ च सन्देहसंकर इति त्रयोऽस्य भेदाः। तत्रादौ प्रथमा संसृष्टिः यथा—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥'

अस्मिन् श्लोके उत्प्रेक्षोपमयोः तिलतण्डुलन्यायेन परस्परानपेक्षया स्थित्याऽर्थालंकारसंसृष्टिः द्वितीया यथा—

पिनष्टीव तरङ्गाग्रैरुदधिः फेनचन्दनम् ।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥

सजातीयोत्प्रेक्षयोः संसृष्टिः—

'आनन्दमन्थरपुरन्दरमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु ते विजयाय मञ्जुमञ्जीरसिञ्जितमनोहरमम्बिकायाः ॥

अत्रोपमानुप्रासयोः संसृष्टिः ।

अङ्गाङ्गिभावसङ्करस्योदाहरणम् । यथा—

'अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः ॥

अत्र सन्ध्यादिवसयोः लिङ्गसाम्यनिबन्धना नायिकानायकव्यवहारप्रतीत्या समासोक्तिः । अनुरागरूपकारणे सत्यपि समागमरूपकार्यानुदयात् विशेषोक्त्यलंकारस्य प्रतीपस्याङ्गमित्यङ्गाङ्गिभावसंकरः ।

द्वितीयसंकरोदाहरणं यथा—'मुखंचन्द्रं पश्यामि' अत्र साधक-बाधकाभावात् उपमारूकयोः सन्देहसंकरः ।

तृतीयसंकरभेदोदाहरणम् यथा—

मुरारिनिर्गता नूनं नरकप्रतिपन्थिनी ।
तवापि मूर्ध्नि गंगेव चक्रधारा पतिष्यति ॥

मुरारिनिर्गत्येत्यर्थश्लेषोपमायाः नरकप्रतिपन्थिनी शब्दश्लेषोद्भवायाश्च नवेत्यर्थप्रतिपाद्यत्वात् तृतीयसंकरः । तथा चैतेषां चालंकाराणां विन्यासात् अलंकारान्तराणि न सन्ति ।

हिन्दी—शुद्धि, एकप्रधानत्व, संसृष्टि और अलंकार उक्त अलंकारों के ही विन्यासविशेष से बन जाते हैं । इन सबों का उक्त अलंकारों से भेद नहीं है । जहाँ एक ही अलंकार हो वहाँ शुद्धि होती है । दो अलंकारों में जहाँ एक की प्रधानता हो वहाँ एक प्रधानता होती है । तिलतण्डुलन्याय से जहाँ शब्दालंकार अर्थालंकार परस्पर निरपेक्ष होकर स्थित रहते हैं वहाँ संसृष्टि होती है । लिम्पतीव तमोङ्गानि' यहाँ अर्थालंकारों की सृष्टि है । यहाँ अंधकार के वर्णन में

कहा गया है मानो आकाश काजल की वर्षा कर रहा है। यह उत्प्रेक्षा है। असत् पुरुष की सेवा की तरह दृष्टि विफल हो गयी यह उपमा है। अतः इन दोनों अलंकारों की निरपेक्षति होने से संसृष्टि है। नीरक्षीरन्याय से अलंकारों की एक जगह स्थिति को संकर कहते हैं। इस अलंकार के तीन भेद होते हैं—अङ्गाङ्गी भावसंकर, एकाश्रयानुप्रवेशसंकर और सन्देह संकर। 'अनुरागवती संध्या' यह अङ्गाङ्गी भावसंकर का उदाहरण है। यहाँ सध्या और दिन के लिङ्गसाम्य से नायक-नायिका व्यवहारप्रतीति होने के कारण समासोक्ति हुई। यह समासोक्ति अनुराग कारण के रहने पर भी समागम रूप कार्य न होने के कारण प्रतीत होती हुई विशेषोक्ति हो गयी है। अतः अङ्गाङ्गिभाव संकर का उदाहरण हुआ। 'मुखचन्द्रं पश्यामि' यह सन्देहसंकर का उदाहरण है। मुख चन्द्रमा के समान है यह उपमा है अथवा मुखरूपी चन्द्रमा यह रूपक है। यहाँ इन दोनों अलंकारों के सन्देह से सन्देह संकर हुआ। अन्य भेदों का उदाहरण इसी तरह समझ लेना चाहिये ॥ ११८ ॥

**सर्वेषां च प्रतिद्वन्द्वप्रतिच्छन्दभिदाभृताम् ।**
**उपाधिः क्वचिदुद्भिन्नः स्यादन्यत्रापि संभवात् ॥ ११९ ॥**

क्वचिदेकस्यैव विन्यासः क्वचिदन्यस्येति विन्यासभेदमात्रं न त्वलंकारान्तरम्। अन्यथा रसानामपि विन्यासभेदे रसान्तरापत्तिरिति भावः। अपि च सर्वेषामलंकाराणां प्रतिद्वन्द्वप्रतिच्छन्दरूपाणि विसदृशसदृशरूपाण्यलंकारान्तराण्यप्यूहनीयानि। अधिकविसदृशं न्यूनं यथा—

यन्मध्यदेशादपि ते सूक्ष्मं लोलाक्षि लक्ष्यते।
मृणालसूत्रमपि ते न संमाति स्तनान्तरे।

इत्यत्र एतदधिकं विसदृशं तत्र महत्त्वस्य न वाऽणुत्वस्य वर्णनात्।

मधुव्रतौघः कुपितः स्वकीयमधुप्रपापद्मनिमीलनेन।
बिम्बं समाक्रम्य बलात्सुधांशोः कलङ्कमङ्के स्फुटमातनोति ॥

एतत्प्रत्यनीकसदृशम्, न तु तदेव तत्र शत्रुसम्बन्धिनः प्रतिकूलाचरणवर्णनात् अत्र शत्रोरिव तत्कथनात्। अपि चैकोऽलंकारः प्रकारसम्भवादन्यत्राऽप्यूह्यः। यथा पृथक् साधर्म्यकथनेन दृश्यसादृश्यरूपत्वं रूपक इवोपमायामपि। उदाहरणम्—

हनुमानिव दीपोऽयं दूरमुल्लासिताञ्जनः।
किञ्च राम इवाभाति विनिर्दग्धदशाननः॥

एषां केषांचित्पूर्णोपमा। एतैस्तु पूर्णोपमाया लक्षणान्तरमुक्तम्। प्राचीनानां मते पृथक् साधर्म्यहीना लुप्तोपमा। तत्र पूर्वार्द्धेन प्रतिद्वन्द्वादि। द्वितीयार्द्धेनैकालंकारप्रकारोऽलंकारान्तरेऽस्तीत्याह–सर्वेषां चेति॥ ११९॥

अन्वयः—प्रतिद्वन्द्वप्रतिच्छन्दभिदाभृताम् सर्वेषा उद्भिन्नः उपाधिः क्वचित् अन्यत्र अपि सम्भवात् स्यात्।

व्याख्या—शुद्ध्यादीन् निराकर्तुं दूषणान्तराण्याह—प्रतिद्वन्द्वः=विरोधितया न्यूनता, प्रतिच्छन्दः=आधिक्यम् ताभ्यां भिदाभृताम्=भेदं बिभ्रतीति तेषां प्रतिद्वन्द्वप्रतिच्छन्दभिदाभृताम् सर्वेषां=पूर्वोक्तालंकाराणाम्, उद्भिन्नः=कथितः उपाधिः=प्रकारः। क्वचिदन्यत्रापि=उक्तशुद्ध्यादिस्थले अपि सम्भवात् स्यात्=भवेत्। अयमाशयः—सर्वेषामलंकाराणां न्यूनाधिकरूपतया विसदृशरूपाणि भवन्ति। तान्यपि शुद्ध्यादीनामलंकार एव स्वीकारेऽलङ्कारान्तराणि स्युः। एवं चालङ्कारपरिगणनैव न स्यात्। सादृश्यरूपकात् पृथक् कथितसादृश्यरूपकस्याधिक्यम्। इवादिपदाभावे उपमाया न्यूनत्वम्। अत्र रूपकोपमातो भेदादेते सादृश्यरूपकादयोऽलङ्काराः। यथा रूपकोपमातो न भिन्नस्तथैव शुद्ध्यादयोऽपि नालङ्काराणीति भावः।

हिन्दी—शुद्धि आदि को अलंकार मानने से और भी दोष हैं। क्योंकि शुद्धि आदि पूर्वोक्त अलंकारों में पूर्व अलंकारों की अपेक्षा कहीं न्यूनता और कहीं अधिकता के कारण यदि अलंकारत्व माना जाय तो यह न्यूनता ( प्रतिद्वन्द्व ) और अधिकता ( प्रतिच्छन्द ) की उपाधि तो प्रायः सभी अलंकारों में आ जाती है। ऐसी स्थिति में न्यूनाधिक रूप से अलंकारों की गणना अनन्त हो सकती है। अतः शुद्धि अलङ्कार पूर्वोक्त अलंकारों से भिन्न नहीं है। रूपक से पृथक् कथित सादृश्य रूपक में अधिकता है। पूर्णोपमा से लुप्तोपमा में न्यूनता है। इस प्रकार जैसे ये दोनों अलंकार रूपक और उपमा से पृथक् नहीं हैं वैसे ही शुद्ध आदि भी दूसरे अलंकार नहीं हैं॥ ११९॥

माला परंपरा चैषां भूयसामनुकूलके।
मनुष्ये भवतः क्वापि ह्यलङ्काराङ्गतां गते॥ १२०॥

उपाधिः प्रकार उद्भिन्नः कथितः। अन्यत्रापि सम्भवतो योजनाय

एतेषामनुप्रासादीनां शब्दालंकाराणामाश्रयविशेषजिज्ञासाशालिनः प्रति इत्यर्थः ॥ १२० ॥

**अन्वयः**—हि भूयसाम् एषाम् मालापरम्परा च अलङ्कारता गते अनुकूलके मनुष्ये इव क्वापि भवतः।

**व्याख्या**—मालोपमारशनोपमादीनामपि नालङ्कारत्वमित्याह–मालेति। भूयसः = बहूनाम् एषाम्= उक्तालङ्काराणाम् माला=मालारूपतया विन्यासः। परम्परा= रशनाकारेण विन्यासश्च, अलङ्कारताम् =अलंकारोपकारकत्वम्, गते =प्राप्ते, अनुकूले =चमत्कारजनके, मनुष्ये =मानवे, इव =यथा, क्वापि =काव्ये, भवतः = स्तः। मनुष्ये यथा माला परम्परा च शोभाजनके स्तः तथा काव्ये अपि ते शोभाजनके भवतः। अतः मालोपमारशनोपमामालारूपकरशनारूपकाणां नालंकारान्तरत्वम्।

**हिन्दी**—मनुष्य के शरीर में जैसे माला रूप से या श्रृङ्खला रूप से भूषणों का विन्यास होता है उसी तरह काव्य में भी मालोपमा, रशनोपमा, मालारूपक, रशनारूपक अलंकार केवल शोभा बढ़ाते हैं। ये उपमा और रूपक से भिन्न नहीं हैं ॥ १२० ॥

**शब्दे पदार्थे वाक्यार्थे वाक्यार्थस्तबके तथा।**
**एते भवन्ति विन्यासाः स्वभावातिशयात्मकाः ॥ १२१ ॥**

तत्राऽलंकारेषु अनुप्रासादयः शब्दे रूपकादयः पदार्थे उपमादयः वाक्यार्थे दृष्टान्तादयः वाच्यार्थस्तबके इत्याह शब्देति ॥ १२१ ॥

**अन्वयः**—एते विन्यासाः शब्दे पदार्थे वाक्यार्थे तथा वाक्यार्थस्तबके स्वभावातिशयात्मकाः भवन्ति।

**व्याख्या**—अतिशयोक्त्यन्तर्गता एव सर्वे अलंकाराः इति परेषां मतं दूषयितुमादौ तत् स्वरूपं प्रदर्शयते—शब्द इति। कस्यापीति च पदद्वयेन शब्दे =शब्दालंकारे अनुप्रासयमकादयः पदार्थे = उपमारूपकादयः, वाक्यार्थे = वाक्यार्थदृष्टान्ताद्यलंकारे तथा वाक्यार्थस्तवके=अनेकवाक्यार्थगतालंकारे, इत्येते =इमे, विन्यासाः= रचनाविशेषाः स्वभावातिशयात्मकाः, स्वभावात्=निसर्गतः अतिशयात्मकाः =अतिशयः अतिशयोक्तिः आत्मनि येषां ते अतिशयात्मकाः = अतिशयोक्तिस्वरूपा एव भवन्ति।

हिन्दी—शब्दगत अनुप्रास, यमकादि अलंकार, अर्थगत उपमा रूपक आदि अलंकार, वाक्यार्थगत दृष्टान्तादि अलंकार, अनेकवाक्यगत निदर्शना आदि अलंकार सभी अतिशयोक्तिमूलक हैं। इनका रचनाविन्यास अतिशयोक्ति अलंकार से भिन्न नहीं है। कुछ साहित्यकारों का मत है कि अतिशयोक्ति अलंकार से परे कोई अलंकार नहीं है ॥ १२१ ॥

**कस्याप्यतिशयस्योक्तेरित्यन्वर्थविचारणात् ।**
**प्रायेणामी ह्यलंकारा भिन्ना नातिशयोक्तितः ॥ १२२ ॥**

तत्र रूपकादयो विन्यासात्मका अतिशयोक्तिप्रभृतयोऽतिशयात्मकाः स्वभावोक्तिप्रभृतयः स्वभावात्मका इत्याह—एत इति। केचनाऽतिशयस्योक्तिरति नियोगपुरस्कारेणाऽलंकारमात्रमतिशयोक्तिरूपमादायाऽतिशयकथनादित्याह—कस्यापीति ॥ १२२ ॥

अन्वयः—प्रायेण कस्यापि अतिशयस्य उक्तेः विचारणात् अतिशयोक्तितः भिन्ना न (सन्ति)।

व्याख्या—सर्वेषामलंकाराणामतिशयोक्तिसमानतां कथयति—कस्यापीति। अमी =अनुप्रासोपमादयोलंकाराः सर्वे प्रायेण=प्रायशः कस्यापि अतिशयस्य=आधिक्यस्य उक्तेः=कथनस्य अन्वर्थं=सार्थकम् विचारणं= विचारः तस्मात् अन्वर्थविचारणात् =सर्वत्रालंकारेषु अतिशयकथनरूपयौगिकार्थसद्भावात् अतिशयोक्तितः भिन्ना न सन्ति। सर्वे अलंकाराः अतिशयोक्तिरूपा इति भावः। अतिशयोक्तिः वक्रोक्तिरिति पर्यायः। वक्रोक्तिः काव्यजीवितमिति वक्रोक्तिजीवितकार आह। अत एवोक्तम्— 'सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते। यत्नोऽस्यां कविना कार्यः कोलंकारोऽनया विना ॥'

हिन्दी—अनुप्रास, उपमा आदि अलंकारों में किसी न किसी प्रकार से अतिशयोक्ति का कथन होता है। अतः ये अलङ्कार अतिशयोक्ति से भिन्न नहीं है अर्थात् ऐसे भी अलंकार अतिशयोक्ति के अन्तर्गत हैं। [ अतिशयोक्ति का ही दूसरा नाम वक्रोक्ति है। काव्यप्रकाश में भी विशेषोक्ति अलंकार के प्रसङ्ग में लिखा है कि सब अलंकारों में अतिशयोक्ति प्राण रूप से रहती है। इसीसे प्राचीन आचार्यों ने लिखा है कि वक्रोक्ति (अतिशयोक्ति) रचना में ही कवियों को विशेष रूप से ध्यान देना चाहिये। इसके विना कोई अलंकार नहीं होता ] ॥ १२२ ॥

**अलंकारप्रधानेषु ह्यधानेष्वपि साम्यताम्।**
**वैलक्षण्यं प्रतिव्यक्ति प्रतिभाति मुखेष्विव ॥ १२३ ॥**

एतद्दर्शयति—अलङ्कारेति। अतिशयोक्तित्वेन वास्तवेष्वपि उपमादिषु प्रातिस्विकवैलक्षण्यमस्त्येव मुखत्वेन समानामिव मुखानामित्याशयः। साम्यतां समतां छन्दोनुरोधात्तथा। यदि कथंचित्साम्ये भेदपुरस्कारेण नोपमादिनाऽऽम्नायः कथनं तदा कुण्डलकटकादयो भेदा नोरीकार्याः स्युः, तत्रापि यथाकथंचित्साधर्म्यं सत्त्वादित्याह—अलङ्कारेति॥ १२३ ॥

**अन्वयः**—साम्यतां दधानेष्वपि अलङ्कारप्रधानेषु प्रतिव्यक्तिमुखेषु इव वैलक्षण्यं प्रतिभाति।

**व्याख्या**—अतिशयोक्तिवादिनां मतं दूषयति—अलङ्कारेति। साम्यताम्=सादृश्यम् दधानेषु अपि=धारयत्सु अपि अलङ्काराः प्रधानाः=प्रमुखाः यत्र तानि तेषु=वाक्येषु, प्रतिव्यक्ति=प्रतिशरीरं, मुखेषु=आननेषु, इव यथा वैलक्षण्यम्=विलक्षणता भेदः प्रतीयते=प्रत्यक्ष उपलभ्यत एव। यथा असंख्यमनुष्याणां मुखेषु मुखत्वेन समानेष्वपि मुखेषु प्रतिव्यक्ति मुखं विलक्षणं भवति। न सर्वेषां समानं प्रतिभाति तत्=तथातिशयोक्तित्वेन समानेष्वप्युपमाद्यलंकारेषु प्रातिस्विक् भेदोऽस्त्येवेति भावः।

**हिन्दी**—अतिशयोक्तिवादियों के मत का खण्डन करते हैं। जैसे मनुष्य के मुख में कान, आँख, नाक आदि होने के कारण समानता होने पर भो प्रतिव्यक्ति के मुख में विलक्षणता ( भेद ) पाया जाता है उसी प्रकार उपमा आदि अलंकारों में अतिशयिता रूप समानता रहने पर भी परस्पर भेद आवश्यक है। अतः सभो अलङ्कार अतिशयोक्ति से भिन्न है॥ १२३ ॥

अलंकारेषु तथ्येषु यद्यनास्था मनीषिणाम्।
तदर्वाचीनभेदेषु नाम्नां नाम्नाय इष्यताम्॥ १२४॥

तथ्येषु कुण्डलादिषु अर्वाचीना उपमादयः। कुण्डलादिच्छाययैवाऽत्राऽलङ्कारपदप्रयोगात्। यद्वा ननूपमादितो ग्रन्थान्तरसिद्धा भवताऽन्येऽप्यलंकारतया निरुक्तास्तत्र किं बीजमत आह—अलङ्कारेष्विति॥ १२४ ॥

तथ्याऽर्वाचीनयोः पूर्वग्रन्थलिखितैतद्ग्रन्थमात्रलिखितयोरलंकारताप्रयोजकरूपसाम्ये यदि तथ्ये नाऽलंकारपदप्रयोगस्तदाऽर्वाचीनेऽपि मास्तु न वेत्येवमित्याशयः।

**अन्वयः**—यदि तथ्येषु अलंकारेषु मनीषिणाम् अनास्था तत् अर्वाचीनभेदेषु नाम्नां आम्नायः न इष्यताम्।

व्याख्या—निजकल्पितालङ्कारेष्वलङ्कारतां व्यवस्थापयति—अलङ्कारेष्विति । यदि=चेत्, सत्येषु=तथ्येषु अपि प्राचीनेषु=अलङ्कारेषु कुण्डलादिषु भूषणेषु मनीषिणाम्=विदुषाम् अनास्था = अनादरः, तदा अर्वाचीनेषु=आधुनिककविकल्पितेषु उपमादिषु नाम्नाम्=उपमादिनाम्नाम् आम्नायः=पाठः न इष्यताम्=क्रियताम् । यदि नवीनशैलीनिर्मितेषु स्वर्णालंकारेषु अलंकारत्वं न स्वीक्रियते तदा प्राचीनाचार्यलिखितेषु अलंकारेषु अलङ्कारता मा अस्तु । स्वीक्रियते चेदेषां स्वीकारे का हानिः ।

हिन्दी—यदि तथ्यभूत ( प्राचीन ) अलंकारों में विद्वानों की अनास्था है तो ( हमारे द्वारा निर्मित ) भेदों के नाम में भी प्रामाणिकता नहीं है । भाव यह है कि जिस प्रकार प्राचीन शैली से बनाये गये स्वर्ण आदि के अलंकार शोभा के बढ़ानेवाले होते हैं उसी प्रकार आधुनिक ढंग से गढ़े अलंकार भी शोभा बढ़ाते हैं । इसी प्रकार प्राचीनाचार्यों के अलंकार के सदृश ग्रन्थकारनिर्मित कुछ नये अलंकार भी शोभाधायक ( चमत्कारजनक ) होने के कारण अलंकार की मान्यता प्राप्त करने योग्य हैं ॥ १२४ ॥

महादेवः स प्रमुखविबुधैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
चतुर्थः सैकोयम् सुकविजयदेवेन रचितम्
चिरं चन्द्रालोके सुखयतु मयूखः पञ्चमः ॥ १२५ ॥

इति चन्द्रालोके पञ्चमो मयूखः ।



श्रीवीरभद्रभूपतिलब्धनिदेशप्रभावेण ।
चन्द्रालोकमयूखः पञ्चम इह सप्रपञ्चोऽभूत् ॥

॥ इति शरदागमे पञ्चमो मयूखः ॥ ५ ॥

—।०।—

ग्रन्थकर्त्ता जयदेवः स्वरचितचन्द्रालोकस्य पञ्चममयूख-समाप्तिं कथयति—महादेव इत्यादि । अस्य व्याख्या प्राक्प्रतिपादिता ।



# अथ षष्ठो मयूखः

## अथ रसाः

आलम्बनोद्दीपनात्मा विभावः कारणं द्विधा ।
कार्योऽनुभावो भावश्च सहायो व्यभिचार्यपि ॥ १ ॥

बलिसम्पदोऽन्तरायं देवनिकायस्तुतं सततम् ।
वयमिह विघ्नविहृत्यै प्रणताः स्थलवामनं मनसा ॥

अथ रसाऽनुगुणतया विभावादि कथयति—आलम्बनेति । कारणं विभावः । स द्विधा आलम्बनोद्दीपनभेदात् । तत्र शृङ्गारे आलम्बनं कान्ता कान्तश्च । उद्यानादिरुद्दीपनम् । एवमन्यत्रापि । अनुभावः कार्यः स च शृङ्गारभ्रूक्षेपस्मितादिः । भावः सहायः सहकारी स एव व्यभिचारिपदेनाऽप्युच्यत इत्यर्थः । व्यभिचारिणां भावत्वेन व्यवहारो ग्रन्थान्तरे नास्तीति चेन्न । व्यभितो व्यभिचारी भाव इति काव्यप्रकाश एवाऽभिधानात् ॥ १ ॥

काव्यलक्षणोद्देशक्रमेण रीतिनिरूपणं प्रस्तुतेऽपि तासां रसानुबन्धितया पूर्वं रसान्निरूपयिष्यन्नाह—अथ रसाः इति अभिधीयन्त इति शेषः । रस्यते आस्वाद्यते इति रसः । अनया व्युत्पत्या भावादयो रसशब्देनोच्यन्ते । 'रसो वै सः' 'रसं ह्येवाऽयं लब्ध्वा आनन्दी भवति' इति तैत्तिरीयोपनिषदि चिदानन्दस्वरूप आत्मा रसशब्देनोक्तः । स एव रसशब्दः शृङ्गारादिषु रसेषु व्यवह्रियते । विभावादिभिर्व्यक्तः रत्यादिस्थायीभावः रसो वक्ष्यमाणः । ग्रन्थकारः पूर्वं विभावादीन् व्याचष्टे—आलम्बनेति । लोके यत्कारणं तदेव विभावनरूपो लौकिकव्यापारवत्तया विभावशब्देनोच्यते । विभावयन्ति आस्वादयोग्यान् जनयन्ति रत्यादिस्थायीभावानिति विभावाः । सोऽयं विभावः आलम्बन उद्दीपनश्च आत्मा यस्य सः आलम्बनोद्दीपनात्मा सन् द्विधा=द्विरूपो भवति । सोऽयं द्विरूपो विभावः रसमात्रे कारणम् । आलम्बनं नायिकादिः तमालम्ब्य रसोद्गमात् । ये च रसमुद्दीपयन्ति चन्द्र-चन्दन-रोलम्बाद्याः ते उद्दीपनविभावा एव । उद्दीपनविभावश्च चतुर्धा । यथोक्तम्—

'आलम्बनगुणाश्चैव तच्चेष्टा तदलङ्कृतिः ।
तटस्थश्चेति विज्ञेयश्चतुष्कोद्दीपनक्रमः ॥

